नान्वेति त्वां पदमपि पदाद्विप्रलुब्धोऽसि भूयः
सख्यं साधो यदि हि मतिमान्माग्रहीर्विग्रहेण ॥ १९९ ॥
न कोऽप्यन्योऽन्येन व्रजति समवायं गुणवता
गुणी केनापि त्वं समुपगतवान् रूपिभिरसौ ।
न ते रूपं ते यानुपव्रजसि तेषां गतमति-
स्ततश्छेद्यो भेद्यो भवसि भवदुःखे भववने ॥ २०० ॥
माता जातिः पिता मृत्युराधिव्याधी सहोद्गतौ ।
प्रान्ते जन्तोर्जरा मित्रं तथाप्याशा शरीरके ॥ २०१ ॥
शुद्धोऽप्यशेषविषयावगमोऽप्यमूर्तो-
ऽप्यात्मन् त्वमप्यतितरामशुचीकृतोऽसि ।
मूर्तं सदा शुचि विचेतनमन्यदत्र
किं वा न दूषयति धिग्धिगिदं शरीरम् ॥ २०२ ॥
हा हतोऽसितरां जन्तो येनास्मिंस्तव सांप्रतम् ।
ज्ञानं कायाशुचिज्ञानं तत्त्यागः किल साहसम् ॥ २०३ ॥
अपि रोगादिभिर्वृद्धैर्न मुनिः खेदमृच्छति ।
उडुपस्थस्य कः क्षोभः प्रवृद्धेऽपि नदीजले ॥ २०४ ॥
जातामयः प्रतिविधाय तनौ वसेद्वा
नो चेत्तनुं त्यजतु वा द्वितयी गतिः स्यात् ।
लग्नाग्निमावसति वह्निमपोह्य गेहं
निर्हाय वा व्रजति तत्र सुधीः किमास्ते ॥ २०५ ॥
शिरस्थं भारमुत्तार्य स्कन्धे कृत्वा सुयत्नतः ।
शरीरस्थेन भारेण अज्ञानी मन्यते सुखम् ॥ २०६ ॥
यावदस्ति प्रतीकारस्तावत्कुर्यात् प्रतिक्रियाम् ।
तथाप्यनुपशान्तानामनुद्वेगः प्रतिक्रिया ॥ २०७ ॥
यदा यदा भवेजन्मी त्यक्त्वा मुक्तो भविष्यति ।
शरीरमेव तत्त्याज्यं किं शेषैः क्षुद्रकल्पनैः ॥ २०८ ॥

नयत्सर्वाशुचिप्रायं शरीरमपि पूज्यतां ।
सोऽप्यात्मा येन न स्पृश्यो दुश्चरित्र धिगस्तु तत् ॥२०९ ॥
रसादिराद्यो भाग· स्यात् ज्ञानावृत्यादिरन्वितः ।
ज्ञानादयस्तृतीयस्तु संसार्य्येवं त्रयात्मक. ॥ २१० ॥
भागत्रयमिद नित्यमात्मान वन्धवर्त्तिनम् ।
भागद्वयात् पृथक्कर्तुं यो जानाति स तत्त्ववित् ॥ २११ ॥
करोतु न चिर घोर तप क्लेशासहो भवान् ।
चित्तसाध्यान् कपायारीन्न जयेद्यत्तदज्ञता ॥ २१२ ॥
हृदयसरसि यावन्निर्मलेऽप्यत्यगाधे
वसति खलु कपायग्राहचक्र समन्तात् ।
श्रयति गुणगणोऽयं तन्न तावद्विशङ्क
समदमयमशेषैस्तान् विजेतुं यतस्व ॥ २१३ ॥
हित्वा हेतुफले किलात्र सुधियस्तां सिद्धिमामुत्रिकीं
वाञ्छन्त स्वयमेव साधनतया शसन्ति शान्तं मनः ।
तेपामाखुविडालिकेति तदिदं धिग्धिक्कलेः प्राभवं
येनैतेऽपि फलद्वयप्रलयनाद्दूरं विपर्य्यासिता· ॥ २१४ ॥
उद्युक्तस्त्वं तपस्यस्यधिकमभिभवंस्त्वामगच्छन्कपाया
प्राभूद्वोधोऽप्यगाधो जलमिव जलधौ किन्तु दुर्लक्ष्यमन्यैः ।
निर्व्यूढेऽपि प्रवाहे सलिलमिव मनाग्निम्नदेशेष्ववश्य
मात्सर्य्यन्ते स्वतुल्यैर्भवति परवशाद्दुर्जय तज्जहीहि ॥ २१५ ॥
चित्तस्थमप्यनवबुध्य हरेण जाड्या
क्रुद्धा वहि· किमपि दग्धमनङ्गबुध्या ।
घोरामवाप स हि तेन कृतामवस्थां
क्रोधोदयाद्भवति कस्य न कार्य्यहानि· ॥ २१६ ॥
चक्रं विहाय निजदक्षिणबाहुसस्थं
यत्प्राव्रजन्ननु तदैव स तेन मुक्त· ।

क्लेशं तमाप किल बाहुबली चिराय
मानो मनागपि हतिं महतीं करोति ॥ २१७ ॥
सत्यं वाचि मतौ श्रुतं हृदि दया शौर्य्यं भुजे विक्रमो
लक्ष्मीर्दानमनूनमर्थिनिचये मार्गे गतिर्निर्वृते ।
येषां प्रागजनीह तेऽपि निरहङ्कारा श्रुतेर्गोचरा-
श्चित्रं संप्रति लेशतोऽपि न गुणास्तेषां तथाप्युद्धताः ॥ २१८ ॥
वसति भुवि समस्तं सापि संधारितान्यै-
रुदरमुपनिविष्टा सा च ते चापरस्य ।
तदपि किल परेषां ज्ञानकोणे निलीनं
वहति कथमिहान्यो गर्वमात्माधिकेषु ॥ २१९ ॥
यशोमारीचीय कनकमृगमायामलिनितं
हतोऽश्वत्थामोक्त्या प्रणयिलघुरासीद्यमसुतः ।
सकृष्णः कृष्णोऽभूत्कपटबटुवेषेण नितरा-
मपिच्छद्माल्पं तद्विषमिव हि दुग्धस्य महतः ॥ २२० ॥
भेय मायामहागर्तान्मिथ्याघनतमोमयात् ।
यस्मिन् लीना न लक्ष्यन्ते क्रोधादिविषमाहयः ॥ २२१ ॥
प्रच्छन्नकर्म मम कोऽपि न वेत्ति धीमान्
ध्वंसं गुणस्य महतोऽपि हि मेति संस्था ।
कामं गिलन् धवलदीधितिधौतदाहो
गूढोऽप्यबोधि न विधुः सविधुन्तुदः कैः ॥ २२२ ॥
वनचरभयाद्धावन् दैवाल्लताकुलवालधिः
किल जडतया लोलो वालव्रजे विचलं स्थितः ।
वत स चमरस्तेन प्राणैरपि प्रवियोजितः
परिणततृषां प्रायेणैवंविधा हि विपत्तयः ॥ २२३ ॥
विषयविरतिः संगत्यागः कषायविनिग्रहः
शमयमदमास्तत्त्वाभ्यासस्तपश्चरणोद्यमः ।

नियमितमनोवृत्तिर्भक्तिर्जिनेषु दयालुता
भवति कृतिनः संसाराब्धेस्तटे निकटे सति ॥ २२४ ॥
यमनियमनितान्तः शान्तबाह्यान्तरात्मा
परिणमितसमाधिः सर्वसत्त्वानुकम्पी ।
विहितहितमिताशी क्लेशजालं समूलं
दहति निहतनिद्रो निश्चिताध्यात्मसारः ॥ २२५ ॥
समधिगतसमस्ताः सर्वसावद्यदूराः
स्वहितनिहितचित्ताः शान्तसर्वप्रचाराः ।
स्वपरसफलजल्पाः सर्वसंकल्पमुक्ताः
कथमिह न विमुक्तेर्भाजनं ते विमुक्ताः ॥ २२६ ॥
दासत्वं विषयप्रभोर्गतवतामात्मापि येषां पर-
स्तेषां भो गुणदोषशून्यमनसां किं तत्पुनर्नश्यति ।
भेतव्यं भवतैव यस्य भुवनप्रद्योति रत्नत्रयं
भ्राम्यन्तीन्द्रियतस्कराश्च परितस्त्वं तन्मुहुर्जागृहि ॥ २२७ ॥
रम्येषु वस्तुवनितादिषु वीतमोहो
मुह्येद्वृथा किमिति संयमसाधनेषु ।
धीमान् किमामयभयात्परिहृत्य भुक्तिं
पीत्वौषधं व्रजति जातुचिदप्यजीर्णम् ॥ २२८ ॥
तपः श्रुतमिति द्वयं बहिरुदीर्य्य रूढं यथा
कृषीफलमिवालये समुपनीयते स्वात्मनि ।
कृषीवल इवोज्झितं करणचौरव्याधादिभि-
स्तदा हि मनुते यतिः स्वकृतकृत्यतां धीरधीः ॥ २२९ ॥
दृष्टार्थस्य न मे किमप्ययमिति ज्ञानावलेपादमुं
नोपेक्षस्व जगत्त्रयैकडमरं निःशेषयाशाद्विपम् ।
पश्याम्भोनिधिमप्यगाधसलिलं चावाधते वाडवः
क्रोडीभूतविपक्षकस्य जगति प्रायेण शान्तिः कुतः ॥ २३० ॥

स्नेहानुबद्धहृदयो ज्ञानचरित्रान्वितोऽपि न श्लाघ्य. ।
दीप इवापादयिता कज्जलमलिनस्य कार्य्यस्य ॥ २३१ ॥
रतेररतिमायातः पुनाररतिमुपागतः ।
तृतीयं पदमप्राप्य बालिशो बत सीदसि ॥ २३२ ॥
तावद्दु.खाग्नितप्तात्माऽयःपिण्ड इव सीदसि ।
निर्वासिनिर्वृताम्भोधौ यावत्त्वं न निमज्जसि ॥ २३३ ॥
मक्षुमोक्षं सुसम्यक्त्वं सत्यंकारस्वसात्कृतं ।
ज्ञानचारित्रसाकल्यमूलेन स्वकरे कुरु ॥ २३४ ॥
अशेषमद्वैतमभोग्यभोग्यं निवृत्तिवृत्त्योः परमार्थकोट्याम् ।
अभोग्यभोग्यात्मविकल्पबुद्ध्या निवृत्तिमभ्यस्यतु मोक्षकाङ्क्षी॥२३५॥
निवृत्तिं भावयेद्यावन्निवर्त्यं तदभावतः ।
न वृत्तिर्न निवृत्तिश्च तदेवपदमव्ययम् ॥ २३६ ॥
रागद्वेषौ प्रवृत्तिः स्यान्निवृत्तिस्तन्निषेधनम् ।
तौ च बाह्यार्थसम्बद्धौ तस्मात्तांश्च परित्यजेत् ॥ २३७ ॥
भावयामि भवाऽऽवर्त्ते भावनाः प्रागभाविताः ।
भावये भाविताेनेति भवाभावाय भावनाः ॥ २३८ ॥
शुभाशुभे पुण्यपापे सुखदुःखे च षट्त्रयं ।
हितमाद्यमनुष्ठेयं शेषत्रयमथाहितम् ॥ २३९ ॥
तत्राप्याद्यं परित्याज्यं शेषौ न स्तः स्वतः स्वयम् ।
शुभं च शुद्धे त्यक्त्वान्ते प्राप्नोति परमं पदम् ॥ २४० ॥
अस्त्यात्मास्तमितादिबन्धनगतस्तद्बन्धनान्यास्रवै-
स्ते क्रोधादिकृताः प्रमादजनिताः क्रोदादयस्तेऽव्रतात् ।
मिथ्यात्वोपचितात् स एव समलः कालादिलब्धौ क्वचित्
सम्यक्त्वव्रतदक्षताकलुषतायोगै. क्रमान्मुच्यते ॥ २४१ ॥
ममेदमहमस्येति प्रीतिरीतिरिवोत्थिता ।
क्षेत्रे क्षेत्रीयते यावत्तावत्काशा तपःफले ॥ २४२ ॥

मामन्यमन्यं मा मत्वा भ्रान्तो भ्रान्तौ भवार्णवे ।
नान्योऽहमहमेवाहमन्योऽन्योऽन्योऽहमस्ति न ॥ २४३ ॥
बन्धो जन्मनि येन येन निबिडं निष्पादितो वस्तुना
बाह्यार्थैकरतेः पुरापरिणतप्रज्ञात्मन· साम्प्रतम् ।
तत्तत्तन्निधनाय साधनमभूद्वैराग्यकाष्टास्पृशो
दुर्बोधं हि तदन्यदेव विदुषामप्राकृतं कौशलम् ॥ २४४ ॥
अधिकः क्वचिदाश्लेष· क्वचिद्धीनः क्वचित्सम· ।
क्वचिद्विश्लेष एवायं बन्धमोक्षक्रमो मत· ॥ २४५ ॥
यस्य पुण्यं च पापं च निष्फल गलति स्वयम् ।
स योगी तस्य निर्वाण न तस्य पुनरास्रव· ॥ २४६ ॥
महातपस्तडागस्य संभृतस्य गुणाम्भसा ।
मर्य्यादापालिबन्धेऽल्पामप्युपेक्षिष्ट माक्षतिम् ॥ २४७ ॥
दृढगुप्तिकपाटसंवृतिर्धृतिभित्तिर्मतिपादसंभृति· ।
यतिरल्पमपि प्रपद्य रन्ध्रं कुटिलैर्विक्रियते गृहाकृतिः ॥ २४८ ॥
स्वान्दोषान्हन्तुमुद्युक्तस्तपोभिरतिदुर्द्धरैः ।
तानेव पोषयत्यज्ञ· परदोषकथाशनैः ॥ २४९ ॥
दोष· सर्वगुणाकरस्य महतो दैवानुरोधात्क्वचि-
ज्जातो यद्यपि चन्द्रलान्छनसमस्त द्रष्टुमन्धोऽप्यलम् ।
द्रष्टाप्नोति न तावदस्य पदवीमिन्दोः कलङ्क जग-
द्विश्व पश्यति तत्प्रभाप्रकटित कि कोऽप्यगात्तत्पदम् ॥ २५० ॥
यद्यदाचरित पूर्वं तत्तदज्ञानचेष्टितम् ।
उत्तरोत्तरविज्ञानाद्योगिन· प्रतिभासते ॥ २५१ ॥
अपि सुतपसामाशावल्लीशिखा तरुणायते
भवति हि मनोमूले यावन्ममत्वजलार्द्रता ।
इति कृतधिय· कृच्छ्रारम्भैश्चरन्ति निरन्तर
चिरपरिचिते देहेऽप्यस्मिन्नतीव गतस्पृहाः ॥ २५२ ॥

क्षीरनीरवदभेदरूपतस्तिष्ठतोरपि च देहदेहिनोः ।
भेद एव यदि भेदवत्स्वलं वाह्यवस्तुषु वदात्र का कथा॥ २५३ ॥
तप्तोऽहं देहसंयोगाज्जलं वानलसंगमात् ।
इह देहं परित्यज्य शीतीभूताः शिवैषिणः ॥ २५४ ॥
अनादिचयसंबद्धो महामोहो हृदि स्थितः ।
सम्यग्योगेन यैर्वान्तस्तेषामूर्ध्वं विशुध्यति ॥ २५५ ॥
एकैश्वर्यमिहैकतामभिमतावाप्तिं शरीरच्युतिं
दुःखं दुष्कृतनिष्कृतिं सुखमलं संसारसौख्यासनम् ।
सर्वत्यागमहोत्सवव्यतिकरं प्राणव्यय पश्यताम्
किं तद्यन्नसुखाय तेन सुखिनः सत्य सदा साधवः ॥ २५६ ॥
आकृष्योग्रतपोबलैरुदयगो (ग) पुच्छं यदानीयतं
तत्कर्म स्वयमागतं यदि विदः को नाम खेदस्ततः ।
यातव्यो विजिगीषुणा यदि भवेदारम्भकोऽरिः स्वयं
वृद्धिः प्रत्युत नेतुरप्रतिहता तद्विग्रहे कः क्षयः ॥ २५७ ॥
एकाकित्वप्रतिज्ञाः सकलमपि समुत्सृज्य सर्वं सहत्वात्
भ्रान्त्याचिन्त्या. सहायं तनुमिव सहसालोच्य किंचित्सलज्जाः ।
सज्जीभूता. स्वकार्ये तदपगमविधिं बद्धपल्यङ्कबन्धाः
ध्यायन्ति ध्वस्तमोहा गिरिगहनगुहा गुह्यगेहे नृसिंहाः ॥ २५८ ॥
येषां भूषणमङ्गसंगतरज. स्थानं शिलायास्तलम्
शय्या शर्करिला मही सुविहितं गेहं गुहा द्वीपिनाम् ।
आत्मात्मीयविकल्पवीतमतयस्त्रुट्यत्तमोग्रन्थय-
स्ते नो ज्ञानधना मनांसि पुनतां मुक्तिस्पृहा निस्पृहाः ॥ २५९ ॥
दूरारूढतपोऽनुभावजनितज्योति. समुत्सर्पणै-
रन्तस्तत्त्वमद. कथं कथमपि प्राप्य प्रसादं गताः ।

---

१ अत्रेवार्थे वाऽव्यय यथा मणीवोष्ट्रस्येत्यत्र ।

विश्रब्धं हरिणी विलोलनयनैरापीयमाना वने
धन्यास्ते गमयन्त्यचिन्त्यचरितैर्धीराश्चिरं वासरान् ॥ २६० ॥
येषा बुद्धिरलक्ष्यमाणभिदयोराशात्मनोरन्तर
गत्वोच्चैरविधाय भेदमनयोरारान्न विश्राम्यति ।
यैरन्तर्विनिवेशिताः शमधनैर्बाढ बहिर्व्याप्तयः
तेषां नोऽत्र पवित्रयन्तु परमाः पादोत्थिताः पांशवः ॥ २६१ ॥
यत्प्राग्जन्मनि संचितं तनुभृता कर्माशुभ वा शुभं
तद्दैवं तदुदीरणादनुभवन्[1] दुःखं सुखं वागतम् ।
कुर्याद्यः शुभमेव सोऽप्यभिमतो यस्तूभयोच्छित्तये
सर्वारम्भपरिग्रहग्रहपरित्यागी स वन्द्यः सताम् ॥ २६२ ॥
सुख दुःखं वास्यादिह विहितकर्मोदयवशात्
कुतः प्रीतिस्ताप. कुत इति विकल्पाद्यदि भवेत् ।
उदासीनस्तस्य प्रगलितपुराणं न हि नवं
समास्कन्दत्येष स्फुरति सुविदग्धो मणिरिव ॥ २६३ ॥
सकलविमलबोधो देहगेहे विनिर्यन्
ज्वलन इव स काष्ठं निष्ठुरं भस्मयित्वा ।
पुनरपि तदभावे प्रज्वलत्युज्ज्वलः सन्
भवति हि यतिवृत्तं सर्वथाश्चर्यभूमि. ॥ २६४ ॥
गुणी गुणमयस्तस्य नाशस्तन्नाशयिष्यते ।
अतएव हि निर्वाणं शून्यमन्यैर्विकलिपतम् ॥ २६५ ॥
अजातो नश्वरो मूर्त्तः कर्ता भोक्ता सुखी बुधः ।
देहमात्रो मलैर्मुक्तो गत्वोर्ध्वमचलः प्रभुः ॥ २६६ ॥
स्वाधीन्याद्दुःखमप्यासीत्सुखं यदि तपस्विनाम् ।
स्वाधीनसुखसम्पन्ना न सिद्धाः सुखिन. कथम् ॥ २६७ ॥

---

१ 'अनुभवेत्' इत्यपि पाठ. ।

इति कतिपयवाचां गोचरीकृत्य कृत्यं
चरितमुचितमुच्चैश्चेतसां चित्तरम्यम् ।
इदमविकलमन्त सन्ततं चिन्तयन्तः
सपदि विपदपेतामाश्रयन्तु श्रिय ते ॥ २६८ ॥
जिनसेनाचार्य्यपादस्मरणाधीनचेतसाम् ।
गुणभद्रभदन्तानां कृतिरात्मानुशासनम् ॥ २६९ ॥
ऋषभो नाभिसूनुर्यो भूयात्स भविकाय वः ।
यज्ज्ञानसरसि विश्व सरोजमिव भासते ॥ २७० ॥

इति श्रीगुणभद्रभदन्तकृतमात्मानुशासनम् ।



अथ

# आचार्यश्रीमदुमास्वामिविरचितं

# तत्त्वार्थसूत्रं

## ( तत्त्वार्थाधिगममोक्षशास्त्रम् )

## ( १ )

सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥ १ ॥ तत्त्वार्थश्रद्धान सम्यग्दर्शनम् ॥ २ ॥ तन्निसर्गादधिगमाद्वा ॥ ३ ॥ जीवाजीवास्रवबन्धसवरनिर्जरामोक्षास्तत्त्वम् ॥ ४ ॥ नामस्थापनाद्रव्यभावतस्तन्न्यास. ॥ ५ ॥ प्रमाणनयैरधिगमः ॥ ६ ॥ निर्देशस्वामित्वसाधनाऽधिकरणस्थितिविधानत. ॥ ७ ॥ सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पवहुत्वैश्च ॥ ८ ॥ मतिश्रुतावधिमन.पर्ययकेवलानि ज्ञानम् ॥ ९ ॥ तत्प्रमाणे ॥ १० ॥ आद्ये परोक्षम् ॥ ११ ॥ प्रत्यक्षमन्यत् ॥ १२ ॥ मतिः स्मृतिः संज्ञा चिन्ताऽभिनिवोध इत्यनर्थान्तरम् ॥ ॥ १३ ॥ तदिन्द्रियानिन्द्रियनिमित्तम् ॥ १४ ॥ अवग्रहेहावायधारणा. ॥ १५ ॥ वहुवहुविधक्षिप्राऽनि.सृताऽनुक्तध्रुवाणां सेतराणाम् ॥ १६ ॥ अर्थस्य ॥ १७ ॥ व्यञ्जनस्यावग्रहः ॥ १८ ॥ न चक्षुरनिन्द्रियाभ्याम् ॥ १९ ॥ श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदम् ॥२०॥ भवप्रत्ययोऽवधिर्देवनारकाणाम् ॥ २१ ॥ क्षयोपशमनिमित्तः षड्विकल्प. शेषाणाम् ॥ २२ ॥ ऋजुविपुलमती मनःपर्ययः ॥ २३ ॥ विशुद्ध्यप्रतिपाताभ्यां तद्विशेष. ॥ २४ ॥ विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमन पर्यययो ॥ २५ ॥ मतिश्रुतयोर्निबन्धो द्रव्येष्वसर्वपर्यायेषु ॥ २६ ॥ रूपिष्ववधे ॥ २७ ॥ तदनन्तभागे मन पर्ययस्य ॥ २८ ॥ सर्वद्रव्यपर्यायेषु केवलस्य ॥ २९ ॥ एकादीनि भा-

ज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ ३० ॥ मतिश्रुतावधयो विपर्ययश्च ॥ ३१ ॥ सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत् ॥ ३२ ॥ नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूता नयाः ॥ ३३ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे प्रथमोऽध्यायः ॥१॥

औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च ॥ १ ॥ द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमम् ॥ २ ॥ सम्यक्त्वचारित्रे ॥ ३ ॥ ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ॥ ४ ॥ ज्ञानाज्ञानदर्शनलब्धयश्चतुस्त्रित्रिपञ्च भेदाः सम्यक्त्वचारित्रसंयमासंयमाश्च ॥ ५ ॥ गतिकषायलिङ्गमिथ्यादर्शनाऽज्ञानाऽसंयताऽसिद्धलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः ॥ ६ ॥ जीवभव्याऽभव्यत्वानि च ॥ ७ ॥ उपयोगो लक्षणम् ॥ ८ ॥ स द्विविधोऽष्टचतुर्भेदः ॥९॥ ससारिणो मुक्ताश्च ॥ १० ॥ समनस्कामनस्काः ॥ ११ ॥ संसारिणस्त्रसस्थावराः ॥ १२ ॥ पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः ॥ १३ ॥ द्वीन्द्रियादयस्त्रसाः ॥ १४ ॥ पञ्चेन्द्रियाणि ॥ १५ ॥ द्विविधानि ॥ १६ ॥ निर्वृत्त्युपकरणे द्रव्येन्द्रियम् ॥ १७ ॥ लब्ध्युपयोगौ भावेन्द्रियम् ॥ १८ ॥ स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि ॥ १९ ॥ स्पर्शरसगन्धवर्णशब्दास्तदर्थाः ॥२०॥ श्रुतमनिन्द्रियस्य ॥ २१ ॥ वनस्पत्यन्तानामेकम् ॥ २२ ॥ कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि ॥ २३ ॥ संज्ञिनः समनस्काः ॥ २४ ॥ विग्रहगतौ कर्मयोगः ॥ २५॥ अनुश्रेणि गतिः ॥ ॥ २६ ॥ अविग्रहा जीवस्य ॥ २७ ॥ विग्रहवती च संसारिणः प्राक्चतुर्भ्यः ॥२८॥ एकसमयाऽविग्रहा ॥२९॥ एकं द्वौ त्रीन्वाऽनाहारकः ॥ ३० ॥ सम्मूर्छनगर्भोपपादा जन्म ॥ ३१ ॥ सचित्तशीतसंवृताः सेतरा मिश्राश्चैकशस्तद्योनयः ॥ ३२ ॥ जरायुजाण्डजपोतानां गर्भः ॥ ३३ ॥ देवनारकाणामुपपादः ॥ ३४ ॥ शेषाणां सम्मूर्छनम् ॥ ३५ ॥ औदारिकवैक्रियिकाहारकतैजसकार्मणानि

शरीराणि ॥ ३६ ॥ परं परं सूक्ष्मम् ॥ ३७ ॥ प्रदेशतोऽसंख्येयगुणं प्राक्तैजसात् ॥ ३८ ॥ अनन्तगुणे परे ॥ ३९ ॥ अप्रतीघाते ॥४०॥ अनादिसम्बन्धे च ॥ ४१ ॥ सर्वस्य ॥ ४२ ॥ तदादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ ४३ ॥ निरुपभोगमन्त्यम् ॥ ४४ ॥ गर्भसम्मूर्छनजमाद्यम् ॥ ४५ ॥ औपपादिकं वैक्रियिकम् ॥ ४६ ॥ लब्धिप्रत्ययं च ॥ ४७ ॥ तैजसमपि ॥ ४८ ॥ शुभं विशुद्धमव्याघाति चाहारकं प्रमत्तसंयतस्यैव ॥ ४९ ॥ नारकसम्मूर्छिनो नपुंसकानि ॥ ५० ॥ न देवाः ॥ ५१ ॥ शेषास्त्रिवेदाः ॥ ५२ ॥ औपपादिकचरमोत्तमदेहाः संख्येयवर्षायुषोऽनपवर्त्यायुषः ॥ ५३ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे द्वितीयोऽध्यायः ॥ २ ॥

रत्नशर्कराबालुकापङ्कधूमतमोमहातमःप्रभाभूमयो घनाम्बुवाताकाशप्रतिष्ठाः सप्ताधोऽधः ॥ १ ॥ तासु त्रिंशत्पञ्चविंशतिपञ्चदशदशत्रिपञ्चोनैकनरकशतसहस्राणि पञ्च चैव यथाक्रमम् ॥२॥ नारका नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः ॥ ३ ॥ परस्परोदीरितदुःखाः ॥ ४ ॥ संक्लिष्टासुरोदीरितदुःखाश्च प्राक्चतुर्थ्याः ॥ ५ ॥ तेष्वेकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमा सत्त्वानां परा स्थितिः ॥ ६ ॥ जम्बूद्वीपलवणोदादयः शुभनामानो द्वीपसमुद्राः ॥ ७ ॥ द्विर्द्विर्विष्कम्भाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः ॥८॥ तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कम्भो जम्बूद्वीपः ॥९॥ भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतवर्षाः क्षेत्राणि ॥ १० ॥ तद्विभाजिनः पूर्वापरायता हिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिणो वर्षधरपर्वताः ॥ ११ ॥ हेमार्जुनतपनीयवैडूर्यरजतहेममयाः ॥ १२ ॥ मणिविचित्रपार्श्वा उपरि मूले च तुल्यविस्ताराः ॥ १३ ॥ पद्ममहापद्मतिगिञ्छकेसरिमहापुण्डरीकपुण्डरीका ह्रदास्तेषामुपरि ॥ १४ ॥ प्रथमो योजनसहस्रायामस्तदर्द्धविष्कम्भो ह्रदः ॥ १५ ॥ दशयोजनावगाहः ॥ १६ ॥ तन्मध्ये योजनं पुष्क-

रम् ॥ १७ ॥ तद्द्विगुणद्विगुणा ह्रदाः पुष्कराणि च ॥ १८ ॥ तन्नि-
वासिन्यो देव्यः श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्म्यः पल्योपमस्थितयः स-
सामानिकपरिषत्काः ॥ १९ ॥ गङ्गासिन्धुरोहिद्रोहितास्याहरिद्धरि-
कान्तासीतासीतोदानारीनरकान्तासुवर्णरूप्यकूलारक्तारक्तोदाः स-
रिस्तन्मध्यगाः ॥ २० ॥ द्वयोर्द्वयोः पूर्वाः पूर्वगाः ॥ २१ ॥ शेषा-
स्त्वपरगाः ॥ २२ ॥ चतुर्दशनदीसहस्रपरिवृत्ता गङ्गासिन्ध्वादयो
नद्यः ॥ २३ ॥ भरतः षड्विंशतिपञ्चयोजनशतविस्तारः षट्चैकोन-
विंशतिभागा योजनस्य ॥ २४ ॥ तद्द्विगुणद्विगुणविस्तारा वर्षधरवर्षा
विदेहान्ताः ॥ २५ ॥ उत्तरा दक्षिणतुल्याः ॥ २६ ॥ भरतैरावतयो-
र्वृद्धिह्रासौ षट्समयाभ्यामुत्सर्प्पिण्यवसर्प्पिणीभ्याम् ॥२७॥ ताभ्या-
मपरा भूमयोऽवस्थिताः ॥ २८ ॥ एकद्वित्रिपल्योपमस्थितयो
हैमवतकहारिवर्षकदैवकुरवकाः ॥ २९ ॥ तथोत्तराः ॥ ३० ॥ वि-
देहेषु सङ्ख्येयकालाः ॥ ३१ ॥ भरतस्य विष्कम्भो जम्बूद्वीपस्य नव-
तिशतभागः ॥ ३२ ॥ द्विर्धातकीखण्डे ॥३३॥ पुष्करार्द्धे च ॥३४॥
प्राङ्मानुषोत्तरान्मनुष्याः ॥ ३५ ॥ आर्य्या म्लेच्छाश्च ॥ ३६ ॥
भरतैरावतविदेहाः कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्यः ॥ ३७ ॥
नृस्थिती परावरे त्रिपल्योपमान्तर्मुहूर्ते ॥ ३८ ॥ तिर्यग्योनिजानां
च ॥ ३९ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे तृतीयोऽध्यायः ॥ ३ ॥

देवाश्चतुर्णिकायाः ॥ १ ॥ आदितस्त्रिषु पीतान्तलेश्याः ॥ २ ॥
दशाष्टपञ्चद्वादशविकल्पाः कल्पोपपन्नपर्य्यन्ताः ॥ ३ ॥ इन्द्रसामा-
निकत्रायस्त्रिंशपारिषदात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकि-
ल्बिषिकाश्चैकशः ॥ ४॥ त्रायस्त्रिंशलोकपालवर्ज्या व्यन्तरज्योतिष्काः
॥ ५ ॥ पूर्वयोर्द्वीन्द्राः ॥ ६ ॥ कायप्रवीचारा आ ऐशानात् ॥ ७ ॥
शेषाः स्पर्शरूपशब्दमनःप्रवीचाराः ॥ ८ ॥ परेऽप्रवीचाराः ॥ ९ ॥
भवनवासिनो ऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमा-

राः ॥ १० ॥ व्यन्तराःकिन्नरकिम्पुरुषमहोरगगन्धर्वयक्षराक्षस-भूतपिशाचाः ॥ ११ ॥ ज्योतिष्काः सूर्य्याचन्द्रमसौ ग्रहनक्षत्रप्रकीर्णकतारकाश्च ॥ १२ ॥ मेरुप्रदक्षिणा नित्यगतयो नृलोके ॥१३॥ तत्कृतः कालविभागः ॥१४॥ बहिरवस्थिता ॥ १५ ॥ वैमानिकाः ॥ १६ ॥ कल्पोपपन्नाः कल्पातीताश्च ॥ १७ ॥ उपर्युपरि ॥ १८ ॥ सौधर्म्मैशानसानत्कुमारमाहेन्द्रब्रह्मब्रह्मोत्तरलान्तवकापिष्टशुक्रमहाशुक्रशतारसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयकेषु विजयवैजयन्तजयन्तापराजितेषु सर्वार्थसिद्धौ च ॥१९॥ स्थितिप्रभावसुखद्युतिलेश्या विशुद्धीन्द्रियावधिविषयतोऽधिकाः ॥ २० ॥ गतिशरीरपरिग्रहाभिमानतो हीनाः ॥ २१ ॥ पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु ॥ २२ ॥ प्राग्ग्रैवेयकेभ्यः कल्पाः ॥ २३ ॥ ब्रह्मलोकालया लौकान्तिकाः ॥ २४ ॥ सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधारिष्टाश्च ॥ २५ ॥ विजयादिषु द्विचरमाः ॥ २६ ॥ औपपादिकमनुष्येभ्यः शेषास्तिर्यग्योनयः ॥ २७ ॥ स्थितिरसुरनागसुपर्णद्वीपशेषाणां सागरोपमत्रिपल्योपमार्द्धहीनमिताः ॥ २८ ॥ सौधर्मैशानयोः सागरोपमे अधिके ॥२९॥ सानत्कुमारमाहेन्द्रयोः सप्त ॥ ३० ॥ त्रिसप्तनवैकादशत्रयोदशपञ्चदशभिरधिकानि तु ॥ ॥ ३१ ॥ आरणाच्युतादूर्द्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजियादिषु सर्वार्थसिद्धौ च ॥३२ ॥ अपरा पल्योपममधिकम् ॥ ३३ ॥ परतः परतः पूर्वापूर्वानन्तराः ॥ ३४ ॥ नारकाणां च द्वितीयादिषु ॥३५॥ दशवर्षसहस्राणि प्रथमायाम् ॥ ३६ ॥ भवनेषु च ॥ ३७ ॥ व्यन्तराणां च ॥ ३८ ॥ परा पल्योपममधिकं ॥ ३९ ॥ ज्योतिष्काणां च ॥ ४० ॥ तदष्टभागोऽपरा ॥ ४१ ॥ लौकान्तिकानामष्टौ सागरोपमाणि सर्वेषाम् ॥ ४२ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

अजीवकायाधर्म्माधर्म्माकाशपुद्गलाः ॥ १ ॥ द्रव्याणि ॥ २ ॥

जीवाश्च ॥ ३ ॥ नित्यावस्थितान्यरूपाणि ॥ ४ ॥ रूपिणः पुद्गलाः ॥ ५ ॥ आ आकाशादेकद्रव्याणि ॥ ६ ॥ निष्क्रियाणि च ॥ ७ ॥ असङ्ख्येयाः प्रदेशाः धर्म्माधर्म्मैकजीवानाम् ॥ ८ ॥ आकाशस्यानन्ताः ॥ ९ ॥ सङ्ख्येयासङ्ख्येयाश्च पुद्गलानाम् ॥ १० ॥ नाणोः ॥ ॥ ११ ॥ लोकाकाशेऽवगाहः ॥ १२ ॥ धर्म्माधर्म्मयोः कृत्स्ने १३॥ एकप्रदेशादिषु भाज्यः पुद्गलानाम् ॥ १४ ॥ असङ्ख्येयभागादिषु जीवानाम् ॥ १५ ॥ प्रदेशसंहारविसर्प्पाभ्यां प्रदीपवत् ॥ १६ ॥ गतिस्थित्युपग्रहौ धर्म्माधर्म्मयोरुपकारः ॥ १७ ॥ आकाशस्यावगाहः ॥ १८ ॥ शरीरवाङ्मनःप्राणापानाः पुद्गलानाम् ॥ १९ ॥ सुखदुःखजीवितमरणोपग्रहाश्च ॥ २० ॥ परस्परोपग्रहो जीवानाम् ॥२१॥ वर्त्तनापरिणामक्रियापरत्वापरत्वे च कालस्य ॥ २२ ॥ स्पर्शरसगन्धवर्णवन्तः पुद्गलाः ॥ २३ ॥ शब्दबन्धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायाऽऽतपोद्योतवन्तश्च ॥ २४ ॥ अणवस्कन्धाश्च ॥ २५ ॥ भेदसङ्घातेभ्य उत्पद्यन्ते ॥ २६ ॥ भेदादणु ॥ २७ ॥ भेदसङ्घाताभ्यां चाक्षुषः ॥ २८ ॥ सद्द्रव्यलक्षणम् ॥ २९ ॥ उत्पादव्ययध्रौव्ययुक्तं सत् ॥ ३० ॥ तद्भावाव्ययं नित्यम् ॥ ३१ ॥ अर्प्पितानर्प्पितसिद्धेः ॥ ३२ ॥ स्निग्धरूक्षत्वाद्बन्धः ॥ ३३ ॥ न जघन्यगुणानाम् ॥ ३४ ॥ गुणसाम्ये सदृशानाम् ॥ ३५ ॥ द्व्यधिकादिगुणानां तु ॥ ३६ ॥ बन्धेऽधिकौ पारिणामिकौ च ॥ ३७ ॥ गुणपर्य्ययवद्द्रव्यम् ॥ ३८ ॥ कालश्च ॥ ३९ ॥ सोऽनन्तसमयः ॥ ४० ॥ द्रव्याश्रया निर्गुणा गुणाः ॥ ४० ॥ तद्भावः परिणामः ॥ ४१ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे पश्चमोऽध्याय. ॥ ५ ॥

कायवाङ्मनःकर्म्मयोगः ॥ १ ॥ स आस्रवः ॥ २ ॥ शुभः पुण्यस्याशुभः पापस्य ॥ ३ ॥ सकषायाकषाययोः साम्परायिकेर्य्यापथयोः ॥ ४ ॥ इन्द्रियकषायाव्रतक्रिया. पञ्चचतुःपञ्चपञ्चविंशतिसंख्याः पूर्वस्य भेदाः ॥५॥ तीव्रमन्दज्ञाताज्ञातभावाधिकरणवीर्य-

विशेषेभ्यस्तद्विशेषः ॥ ६ ॥ अधिकरणं जीवाऽजीवाः ॥ ७ ॥ आद्यं संरम्भसमारम्भारम्भयोगकृतकारितानुमतकषायविशेषैस्त्रिस्त्रिस्त्रिश्च तुश्चैकशः ॥ ८ ॥ निर्वर्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः परम् ॥ ९ ॥ तत्प्रदोषनिह्नवमात्सर्यान्तरायासादनोपघाता ज्ञानदर्शनावरणयोः ॥ १० ॥ दुःखशोकतापाक्रन्दनवधपरिदेवनान्यात्मपरोभयस्थानान्यसद्वेद्यस्य ॥ ११ ॥ भूतव्रत्यनुकम्पादानसरागसंयमादियोगः क्षान्तिशौचमिति सद्वेद्यस्य ॥ १२ ॥ केवलिश्रुतसङ्घधर्म्मदेवावर्णवादो दर्शनमोहस्य ॥ १३ ॥ कषायोदयात्तीव्रपरिणामश्चारित्रमोहस्य ॥ १४ ॥ बह्वारम्भपरिग्रहत्वं नारकस्यायुषः ॥ १५॥ माया तैर्यग्योनस्य ॥ १६ ॥ अल्पारम्भपरिग्रहत्वं मानुषस्य ॥१७॥ स्वभावमार्दवं च ॥ १८ ॥ निःशीलव्रतत्वं च सर्वेषाम् ॥ १९ ॥ सरागसंयमसंयमासंयमाऽकामनिर्जराबालतपांसि दैवस्य ॥ २० ॥ सम्यक्त्वं च ॥ २१ ॥ योगवक्रता विसंवादनं चाशुभस्य नाम्नः ॥ ॥ २२ ॥ तद्विपरीतं शुभस्य ॥ २३ ॥ दर्शनविशुद्धिर्विनयसम्पन्नता शीलव्रतेष्वनतीचारोऽभीक्ष्णज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी साधुसमाधिर्वैयावृत्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थंकरत्वस्य ॥ ॥ २४ ॥ परात्मनिन्दाप्रशंसे सदसद्गुणोच्छादनोद्भावने च नीचैर्गोत्रस्य ॥ २५ ॥ तद्विपर्ययौ नीचैर्वृत्त्यनुत्सेकौ चोत्तरस्य ॥ २६ ॥ विघ्नकरणमन्तरायस्य ॥ २७ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे षष्ठोऽध्यायः ॥ ६ ॥

हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम् ॥ १ ॥ देशसर्वतोऽणुमहती ॥ २ ॥ तत्स्थैर्यार्थं भावनाः पञ्च पञ्च ॥ ३ ॥ वाङ्मनोगुप्तीर्यादाननिक्षेपणसमित्यालोकितपानभोजनानि पञ्च ॥ ४ ॥ क्रोधलोभभीरुत्वहास्यप्रत्याख्यानान्यनुवीचीभाषणं च पञ्च ॥ ५ ॥ शून्यागारविमोचितावासपरोपरोधाकरणभैक्ष्यशुद्धिसधर्म्माविसंवा-

दाः पञ्च ॥ ६ ॥ स्त्रीरागकथाश्रवणतन्मनोहराङ्गनिरीक्षणपूर्वरतानुस्मरणवृष्येष्टरसस्वशरीरसंस्कारत्यागाः पञ्च ॥ ७ ॥ मनोज्ञामनोज्ञेन्द्रियविषयरागद्वेषवर्जनानि पञ्च ॥ ८ ॥ हिंसादिष्विहामुत्रापायावद्यदर्शनम् ॥ ९ ॥ दुःखमेव वा ॥ १० ॥ मैत्रीप्रमोदकारुण्यमाध्यस्थानि च सत्त्वगुणाधिकक्लिश्यमानाविनयेषु ॥ ११ ॥ जगत्कायस्वभावौ वा संवेगवैराग्यार्थम् ॥ १२ ॥ प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा ॥ १३ ॥ असदभिधानमनृतम् ॥ १४ ॥ अदत्तादानं स्तेयम् ॥ १५ ॥ मैथुनमब्रह्म ॥ १६ ॥ मूर्छा परिग्रहः ॥ १७ ॥ निःशल्यो व्रती ॥१८॥ अगार्यनगारश्च ॥१९॥ अणुव्रतोऽगारी ॥२०॥ दिग्देशानर्थदण्डविरतिसामायिकप्रोषधोपवासोपभोगपरिभोगपरिमाणातिथिसंविभागव्रतसम्पन्नश्च ॥ २१ ॥ मारणान्तिकीं सल्लेखनां जोषिता ॥ २२ ॥ शङ्काकाङ्क्षाविचिकित्साऽन्यदृष्टिप्रशंसासंस्तवाःसम्यग्दृष्टेरतीचाराः॥२३॥व्रतशीलेषु पञ्च पञ्च यथाक्रमम्॥२४॥ बन्धवधच्छेदातिभारारोपणान्नपाननिरोधाः ॥ २५ ॥ मिथ्योपदेशरहोभ्याख्यानकूटलेखक्रियान्यासापहारसाकारमन्त्रभेदाः ॥ २६ ॥ स्तेनप्रयोगतदाहृतादानविरुद्धराज्यातिक्रमहीनाधिकमानोन्मानप्रतिरूपकव्यवहाराः ॥ २७ ॥ परविवाहकरणेत्वरिकापरिगृहीतापरिगृहीतागमनानङ्गक्रीडाकामतीव्राभिनिवेशाः ॥ २८ ॥ क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यप्रमाणातिक्रमाः ॥ २९ ॥ ऊर्ध्वाधस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धिस्मृत्यन्तराधानानि ॥ ३० ॥ आनयनप्रेष्यप्रयोगशब्दरूपानुपातपुद्गलक्षेपाः ॥ ३१ ॥ कन्दर्पकौत्कुच्यमौखर्यासमीक्ष्याधिकरणोपभोगपरिभोगानर्थक्यानि ॥ ३२ ॥ योगदुःप्रणिधानानादरस्मृत्यनुपस्थानानि ॥ ३३ ॥ अप्रत्यवेक्षिताऽप्रमार्जितोत्सर्गादानसंस्तरोपक्रमणानादरस्मृत्यनुपस्थानानि ॥ ३४ ॥ सचित्तसम्बन्धसन्मिश्राभिषवदुःपक्वाहाराः ॥ ३५ ॥ सचित्तनिक्षेपापिधानपरव्यपदेशमात्सर्यकालातिक्रमाः ॥ ३६ ॥ जीवितमर-

णाशंसामित्रानुरागसुखानुबन्धनिदानानि ॥ ३७ ॥ अनुग्रहार्थं स्वस्यातिसर्गो दानम् ॥ ३८ ॥ विधिद्रव्यदातृपात्रविशेषात्त-द्विशेषः ॥ ३९ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे सप्तमोऽध्याय. ॥ ७ ॥

मिथ्यादर्शनाविरतिप्रमादकपाययोगा बन्धहेतव. ॥ १ ॥ सकपायत्वाज्जीवः कर्म्मणो योग्यान्पुद्गलानादत्ते स बन्धः ॥ २ ॥ प्रकृतिस्थित्यनुभागप्रदेशास्तद्विधय. ॥ ३ ॥ आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रान्तराया. ॥ ४ ॥ पञ्चनवद्व्यष्टाविंशति चतुर्द्विचत्वारिंशद्द्विपञ्चभेदायथाक्रमम् ॥ ५ ॥ मतिश्रुतावधिमन पर्य्ययकेवलानाम् ॥ ६ ॥ चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानगृद्धयश्च ॥ ७ ॥ सदसद्वेद्ये ॥८॥ दर्शनचारित्रमोहनीयाकपायकपायवेदनीयाख्यास्त्रिद्विनवषोडशभेदाः । सम्यक्त्वमिथ्यात्वतदुभयान्यऽकपायकपायौ हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुन्नपुसकवेदा अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानसंज्वलनविकल्पाश्चैकशः क्रोधमानमायालोभाः ॥ ९ ॥ नारकतैर्यग्योनमानुषदैवानि ॥ १० ॥ गतिजातिशरीराङ्गोपाङ्गनिर्माणबन्धनसङ्घातसस्थानसंहननस्पर्शरसगन्धवर्णानुपूर्व्यगुरुलघूपघातपरघातातपोद्योतोच्छ्वासविहायोगतय. प्रत्येकशरीरत्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तिस्थिरादेययश कीर्तिसेतराणि तीर्थकरत्व च ॥ ११ ॥ उच्चैर्नीचैश्च ॥ १२ ॥ दानलाभभोगोपभोगवीर्याणाम् ॥ १३ ॥ आदितस्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटीकोट्य. परा स्थिति. ॥ १४ ॥ सप्ततिर्मोहनीयस्य ॥१५॥ विंशतिर्नामगोत्रयोः ॥ ॥ १६ ॥ त्रयस्त्रिंशत्सागरोपमाण्यायुप. ॥ १७ ॥ अपरा द्वादशमुहूर्ता वेदनीयस्य ॥ १८ ॥ नामगोत्रयोरष्टौ ॥ १९ ॥ शेषाणामन्तर्मुहूर्ता ॥ २० ॥ विपाकोऽनुभव ॥ २१ ॥ स यथानाम ॥ २२ ॥ ततश्च निर्जरा ॥ २३ ॥ नामप्रत्यया. सर्वतो योगविशेषात्सूक्ष्मैकक्षे-

त्रावगाहस्थिताः सर्वात्मप्रदेशेष्वनन्तानन्तप्रदेशाः ॥ २४ ॥ सद्वेद्यःशुभायुर्नामगोत्राणि पुण्यम् ॥ २५ ॥ अतोऽन्यत्पापम् ॥ २६ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रेऽष्टमोऽध्याय ॥ ८ ॥

आस्रवनिरोधःसंवरः॥ १ ॥ स गुप्तिसमितिधर्म्मानुप्रेक्षापरीषहजयचारित्रैः ॥ २ ॥ तपसा निर्जरा च ॥ ३ ॥ सम्यग्योगनिग्रहो गुप्तिः ॥ ४ ॥ ईर्य्याभाषैषणादाननिक्षेपोत्सर्गाः समितयः ॥ ५ ॥ उत्तमक्षमामार्दवार्जवसत्यशौचसंयमतपस्त्यागाकिञ्चन्यब्रह्मचर्य्याणि धर्म्मः ॥ ६ ॥ अनित्याशरणसंसारैकत्वान्यत्वाशुच्यास्रवसंवरनिर्जरालोकबोधिदुर्लभधर्म्मस्वाख्याततत्त्वानुचिन्तनमनुप्रेक्षाः ॥ ७ ॥ मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः ॥ ८ ॥ क्षुत्पिपासाशीतोष्णदंशमसकनाग्न्यारतिस्त्रीचर्य्यानिषद्याशय्याक्रोशवधयाच्ञालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाऽज्ञानाऽदर्शनानि ॥ ९ ॥ सूक्ष्मसाम्परायछद्मस्थवीतरागयोश्चतुर्दश ॥ १० ॥ एकादश जिने ॥ ११ ॥ बादरसाम्पराये सर्वे ॥१२॥ ज्ञानावरणे प्रज्ञाज्ञाने ॥१३॥ दर्शनमोहान्तराययोरदर्शनालाभौ ॥ १४ ॥ चारित्रमोहे नाग्न्यारतिस्त्रीनिषद्याक्रोशयाच्ञासत्कारपुरस्काराः ॥ १५ ॥ वेदनीये शेषाः ॥ १६ ॥ एकादयो भाज्या युगपदेकस्मिन्नेकोनविंशतिः ॥ १७ ॥ सामायिकच्छेदोपस्थापनापरिहारविशुद्धिसूक्ष्मसाम्पराययथाख्यातमिति चारित्रम् ॥१८॥ अनशनावमौदर्य्यवृत्तिपरिसङ्ख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशा बाह्यं तपः ॥ १९ ॥ प्रायश्चित्तविनयवैयावृत्यस्वाध्यायव्युत्सर्गध्यानान्युत्तरम् ॥ २० ॥ नवचतुर्दशपञ्चद्विभेदा यथाक्रमं प्राग्ध्यानात् ॥ २१ ॥ आलोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेदपरिहारोपस्थापनाः ॥ २२ ॥ ज्ञानदर्शनचारित्रोपचाराः ॥ २३ ॥ आचार्य्योपाध्यायतपस्विशैक्ष्यग्लानगणकुलसङ्घसाधुमनोज्ञानाम् ॥ २४ ॥ वाचनापृच्छनानुप्रेक्षाम्नायधर्मोपदेशाः ॥ २५ ॥ बाह्याभ्यन्तरोपध्यो ॥ २६ ॥ उत्तमसंहननस्यै-

काग्रचिन्तानिरोधो ध्यानमान्तर्मुहूर्तात् ॥ २७ ॥ आर्तरौद्रधर्म्य-शुक्लानि ॥ २८ ॥ परे मोक्षहेतू ॥ २९ ॥ आर्तममनोज्ञस्य सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहार ॥ ३० ॥ विपरीत मनोज्ञस्य ॥ ३१ ॥ वेदनायाश्च ॥ ३२ ॥ निदानं च ॥ ३३ ॥ तदविरतदेश-विरतप्रमत्तसंयतानाम् ॥ ३४ ॥ हिंसानृतस्तेयविषयसंरक्षणेभ्यो रौद्र-मविरतदेशविरतयो ॥ ३५ ॥ आज्ञापायविपाकसंस्थानविचयाय-धर्म्यम् ॥ ३६ ॥ शुक्ले चाद्ये पूर्वविद ॥ ३७ ॥ परे केवलिन. ॥ ॥ ३८ ॥ पृथक्त्वैकत्ववितर्कसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रियानिवर्तीनि ॥ ३९ ॥ त्र्येकयोगकाययोगायोगानाम् ॥ ४० ॥ एकाश्रये सवितर्कवीचारे पूर्वे ॥ ४१ ॥ अवीचारं द्वितीयम् ॥ ४२ ॥ वितर्कः श्रुतम् ॥ ४३ ॥ वीचारोऽर्थव्यञ्जनयोगसंक्रान्तिः ॥ ४४ ॥ सम्यग्दृष्टि-श्रावकविरतानन्तवियोजकदर्शनमोहक्षपकोपशमकोपशान्तमोहक्ष-पकक्षीणमोहजिना. क्रमशोऽसख्येयगुणनिर्जरा. ॥ ४५ ॥ पुलाक-वकुशकुशीलनिर्ग्रन्थस्नातका निर्ग्रन्था. ॥ ४६ ॥ संयमश्रुतप्रति-सेवनातीर्थलिङ्गलेश्योपपादस्थानविकल्पतः साध्याः ॥ ४७ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे नवमोऽध्याय ॥ ९ ॥

मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम् ॥ १ ॥ बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्म्मविप्रमोक्षो मोक्षः ॥ २ ॥ औप शमिकादिभव्यत्वानां च ॥ ३ ॥ अन्यत्रकेवलसम्यक्त्वज्ञानदर्शन-सिद्धत्वेभ्यः ॥ ४ ॥ तदनन्तरमूर्ध्वं गच्छन्त्यालोकान्तात् ॥ ५ ॥ पूर्वप्रयोगादसङ्गत्वाद्बन्धच्छेदात्तथा गतिपरिणामाच्च ॥ ६ ॥ आविद्ध-कुलालचक्रवद्व्यपगतलेपालाम्बूवदेरण्डबीजवदग्निशिखावच्च ॥ ७ ॥ धर्मास्तिकायाऽभावात् ॥ ८ ॥ क्षेत्रकालगतिलिङ्गतीर्थचारित्रप्रत्ये-कबुद्धबोधितज्ञानावगाहनान्तरसंख्याल्पबहुत्वतः साध्याः ॥ ९ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे दशमोऽध्याय ॥ १० ॥

अक्षरमात्रपदस्वरहीनं व्यञ्जनसन्धिविवर्जितरेफम् ।
साधुभिरत्र मम क्षन्तव्यं को न विमुह्यति शास्त्रसमुद्रे ॥ १ ॥
दशाध्याये परिच्छिन्ने तत्त्वार्थे पठिते सति ।
फलं स्यादुपवासस्य भाषितं मुनिपुङ्गवैः ॥ २ ॥

इति तत्त्वार्थसूत्रमपरनामतत्त्वार्थाधिगममोक्षशास्त्रं समाप्तम् ।

---

ॐ

नमः सिद्धेभ्यः

श्रीमदमृतचन्द्रसूरिकृतः

# तत्त्वार्थसारः

## ( ६ )

जयत्यशेषतत्त्वार्थप्रकाशिप्रथितश्रियः ।
मोहध्वान्तौघनिर्भेदि ज्ञानज्योतिर्जिनेशिनः ॥ १ ॥
अथ तत्त्वार्थसारोऽयं मोक्षमार्गैकदीपकः ।
मुमुक्षूणां हितार्थाय प्रस्पष्टमभिधीयते ॥ २ ॥
स्यात्सम्यग्दर्शनज्ञानचारित्रत्रितयात्मकः ।
मार्गो मोक्षस्य भव्यानां युक्त्यागमसुनिश्चितः ॥ ३ ॥
श्रद्धानं दर्शनं सम्यग्ज्ञानं स्यादवबोधनम् ।
उपेक्षणं तु चारित्रं तत्त्वार्थानां सुनिश्चितः ॥ ४ ॥
श्रद्धानाधिगमोऽपेक्षा विषयत्वमिता इतः ।
बोध्याप्रागेवतत्त्वार्था मोक्षमार्गं बुभुत्सुभिः ॥ ५ ॥
जीवोऽजीवास्रवौ बन्ध. संवरो निर्जरा तथा ।
मोक्षश्च सप्त तत्त्वार्था मोक्षमार्गैपिणामिमे ॥ ६ ॥
उपादेयतया जीवोऽजीवो हेयतयोदितः ।
हेयस्यास्मिन्नुपादानहेतुत्वेनास्रवः स्मृत. ॥ ७ ॥
हेयोपादानरूपेण बन्धः स परिकीर्तितः ।
संवरो निर्जरा हेयहानहेतुतयोदितौ ।
हेयप्रहाणरूपेण मोक्षो जीवस्य दर्शित. ॥ ८ ॥

( षट्पदम् )

तत्त्वार्थो खल्वमी नामस्थापनाद्रव्यभावतः ।
न्यस्यमाना नयादेशात्प्रत्येकं स्युश्चतुर्विधा. ॥ ९ ॥
या निमित्तान्तरं किञ्चिदनपेक्ष्य विधीयते ।
द्रव्यस्य कस्यचित् संज्ञा तन्नाम परिकीर्तितम् ॥ १० ॥
सोऽयमित्यक्षकाष्ठादेः संबन्धेनान्यवस्तुनि ।
यद्व्यवस्थापनामात्रं स्थापना साभिधीयते ॥ ११ ॥
भाविनः परिणामस्य यत्प्राप्ति प्रति कस्यचित् ।
स्याद्गृहीताभिमुख्यं हि तद्द्रव्यं ब्रुवते जिनाः ॥ १२ ॥
वर्तमानेन यत्नेन पर्यायेणोपलक्षितम् ।
द्रव्यं भवति भावं तं वदन्ति जिनपुङ्गवाः ॥ १३ ॥
तत्त्वार्थाः सर्व एवैते सम्यग्बोधप्रसिद्धये ।
प्रमाणेन प्रमीयन्ते नीयन्ते च नयैस्तथा ॥ १४ ॥
सम्यग्ज्ञानात्मकं तत्र प्रमाणमुपवर्णितम् ।
तत्परोक्षं भवत्येकं प्रत्यक्षमपरं पुनः ॥ १५ ॥
समुपात्तानुपात्तस्य प्राधान्येन परस्य यत् ।
पदार्थानां परिज्ञानं तत्परोक्षमुदाहृतम् ॥ १६ ॥
इन्द्रियानिन्द्रियापेक्षमुक्तमव्यभिचारि च ।
साकारग्रहणं यत्स्यात्तत्प्रत्यक्षं प्रचक्ष्यते ॥ १७ ॥
सम्यग्ज्ञानं पुनः स्वार्थव्यवसायात्मकं विदुः ।
मतिश्रुतावधिज्ञानं मनःपर्ययकेवलम् ॥ १८ ॥
स्वसंवेदनमक्षोत्थं विज्ञानं स्मरणं तथा ।
प्रत्यभिज्ञानमूहश्च स्वार्थानुमितिरेव वा ॥ १९ ॥
बुद्धिर्मेधादयो याश्च मतिज्ञानभिदा हि ताः ।
इन्द्रियानिन्द्रियेभ्यश्च मतिज्ञानं प्रवर्तते ॥ २० ॥
अवग्रहस्ततस्त्वीहा ततोऽवायोऽथ धारणा ।
बहोर्बहुविधस्यापि क्षिप्रस्यानिःसृतस्य च ॥ २१ ॥

अनुक्तस्य ध्रुवस्येति सेतराणां तु ते मताः ।
व्यक्तस्यार्थस्य विज्ञेयाश्चत्वारोऽवग्रहादयः ॥ २२ ॥
व्यञ्जनस्य तु नेहाद्या एक एव ह्यवग्रहः ।
अप्राप्यकारिणी चक्षुर्मनसी परिवर्ज्य सः ॥ २३ ॥
चतुर्भिरिन्द्रियैरन्यैः क्रियते प्राप्यकारिभिः ।
मतिपूर्वं श्रुतं प्रोक्तमवस्पष्टार्थतर्कणम् ॥ २४ ॥
तत्पर्यायादिभेदेन व्यासाद्विंशतिधा भवेत् ।
परापेक्षां विना ज्ञानं रूपिणां भणितोऽवधिः ॥ २५ ॥
अनुगोऽनानुगामी च तदवस्थोऽनवस्थिति. ।
वर्द्धिष्णुर्हीयमानश्च षड्विकल्प. स्मृतोऽवधिः ॥ २६ ॥
देवानां नारकाणां च स भवप्रत्ययो भवेत् ।
मानुषाणां तिरश्चां च क्षयोपशमहेतुक. ॥ २७ ॥
परकीयमनःस्थार्थज्ञानमक्षानपेक्षया ।
स्यान्मन.पर्ययो भेदौ तस्यर्जुविपुले मती ॥ २८ ॥
विशुद्ध्यप्रतिपाताभ्यां विशेषश्चिन्त्यतां तयोः ।
स्वामिक्षेत्रविशुद्धिभ्यो विषयाच्च सुनिश्चितः ॥ २९ ॥
स्याद्विशेषोऽवधिज्ञानमनःपर्ययबोधयोः ।
असहायं स्वरूपोत्थं निरावरणमक्रमम् ॥ ३० ॥
घातिकार्मक्षयोत्पन्नं केवलं सर्वभावगम् ।
मतेर्विषयसंबन्धः श्रुतस्य च निबुध्यताम् ॥ ३१ ॥
असर्वपर्ययेष्वत्र सर्वद्रव्येषु धीधनैः ।
असर्वपर्ययेष्विष्टो रूपिद्रव्येषु सोऽवधिः ॥ ३२ ॥
स मन.पर्ययस्येष्टोऽनन्तांशेऽवधिगोचरात् ।
केवलस्याखिलद्रव्यपर्यायेषु स सूचितः ॥ ३३ ॥
जीवे युगपदेकस्मिन्नेकादीनि विभावयेत् ।
ज्ञानानि चतुरन्तानि न तु पञ्च कदाचन ॥ ३४ ॥

मतिः श्रुतावधी चैव मिथ्यात्वसमवायिनः ।
मिथ्याज्ञानानि कथ्यन्ते न तु तेषां प्रमाणता ॥ ३५ ॥
अविशेषात्सदसतोरुपलब्धेर्यदृच्छया ।
यत उन्मत्तवज्ज्ञानं न हि मिथ्यादृशोऽञ्जसा ॥ ३६ ॥
वस्तुनोऽनन्तधर्मस्य प्रमाणं व्यञ्जितात्मनः ।
एकदेशस्य नेता यः स नयोऽनेकधा मतः ॥ ३७ ॥
द्रव्यपर्यायरूपस्य सकलस्यापि वस्तुनः ।
नयावंशेन नेतारौ द्वौ द्रव्यपर्ययार्थिकौ ॥ ३८ ॥
अनुप्रवृत्तिः सामान्यं द्रव्य चैकार्थवाचकाः ।
नयस्तद्विषयो यः स्याज्ज्ञेयो द्रव्यार्थिको हि सः ॥ ३९ ॥
व्यावृत्तिश्च विशेषश्च पर्यायश्चैकवाचकाः ।
पर्यायविषयो यस्तु स पर्यायार्थिको मतः ॥ ४० ॥
शुद्धाशुद्धार्थसंग्राही त्रिधा द्रव्यार्थिको नयः ।
नैगमसंग्रहश्चैव व्यवहारश्च संस्मृतः ॥ ४१ ॥
चतुर्धा पर्यायार्थः स्यादृजुशब्दनयाः परे ।
उत्तरोत्तरमत्रैषां सूक्ष्मसूत्रार्थभेदतः ।
शब्दः समभिरूढैवंभूतौ ते शब्दभेदगाः ॥ ४२ ॥
( षट्पदक )

चत्वारोऽर्थनया आद्यास्त्रयः शब्दनयाः परे ।
उत्तरोत्तरमत्रैषां सूक्ष्मगोचरता मता ॥ ४३ ॥
अर्थसंकल्पमात्रस्य ग्राहको नैगमो नयः ।
प्रस्थोदनादिजस्तस्य विषयः परिकीर्तितः ॥ ४४ ॥
भेदे नैक्यमुपानीय स्वजातेरविरोधतः ।
समस्तग्रहणं यस्मात्स नय. संग्रहो मतः ॥ ४५ ॥
संग्रहेण गृहीतानामर्थानां विधिपूर्वकः ।
व्यवहारो भवेद्यस्माद्व्यवहारनयस्तु सः ॥ ४६ ॥

ऋजुसूत्रः स विज्ञेयो येन पर्यायमात्रकम् ।
वर्त्तमानैकसमयविषय परिगृह्यते ॥ ४७ ॥
लिङ्गसाधनसंख्यानां कालोपगृह्योस्तथा ।
व्यभिचारनिवृत्तिः स्याद्यत. शब्दनयो हि सः ॥ ४८ ॥
ज्ञेय. समभिरूढोऽसौ शब्दो यद्विषयः स हि ।
एकस्मिन्नभिरूढार्थे नानार्थान्समतीत्यय. ॥ ४९ ॥
शब्दो येनात्मनाभूतस्तेनैवाध्यवसाययेत् ।
यो नयो मुनयो मान्यास्तमेवं भूतमभ्यधुः ॥ ५० ॥
एते परस्परापेक्षाः सम्यग्ज्ञानस्य हेतव. ।
निरपेक्षा पुन. संतो मिथ्याज्ञानस्य हेतव. ॥ ५१ ॥

आर्या छन्द॰ ।

निर्देशः स्वामित्वं साधनमधिकरणमपि च परिचिन्त्यम् ।
स्थितिरथविधानमिति षड्द्रव्यानामधिगमोपायाः ॥ ५२ ॥
अथ सत्संख्याक्षेत्रस्पर्शनकालान्तराणि भावश्च ।
अल्पबहुत्वं चाष्टावित्यपरेऽप्यधिगमोपायाः ॥ ५३ ॥

शालिनी छन्द ।

सम्यग्योगो मोक्षमार्गं प्रपित्सुर्न्यस्तां नामस्थापनाद्रव्यभावैः ।
स्याद्वादस्थां प्राप्य तैस्तैरुपायै प्राग्जानीयात्सप्ततत्त्वीं क्रमेण ॥५४॥

इति सप्ततत्त्वीपीठिकाबन्ध ॥ १ ॥

अनन्तानन्तजीवानामेकैकस्य प्ररूपकान् ।
प्रणिपत्य जिनान्मूर्ध्ना जीवतत्त्वं प्ररूप्यते ॥ १ ॥
अन्यासाधारणा भावा. पञ्चौपशमिकादय ।
स्व तत्त्वं यस्य तत्त्वस्य जीवः स व्यपदिश्यते ॥ २ ॥
स्यादौपशमिको भाव क्षायौपशमिकस्तथा ।
क्षायिकश्चाप्यौदयिकस्तथान्य. पारिणामिक ॥ ३ ॥
भेदौ सम्यक्त्वचारित्रे द्वावौपशमिकस्य हि ।

अज्ञानत्रितय ज्ञानचतुष्कं पञ्चलब्धयः ॥ ४ ॥
देशसंयमसम्यक्त्वे चारित्रं दर्शनत्रयम् ।
क्षायोपशमिकस्यैते भेदा अष्टादशोदिताः॥ ५ ॥
सम्यक्त्वज्ञानचारित्रवीर्यदानानि दर्शनम् ।
भोगोपभोगौ लाभश्च क्षायिकस्य नवोदिताः ॥ ६ ॥
चतस्रो गतयो लेश्याः षट् कषायचतुष्टयम् ।
वेदा मिथ्यात्वमज्ञानमसिद्धोऽसयंतस्तथा ।
इत्यौदयिकभावस्य स्युर्भेदा एकविंशतिः ॥ ७ ॥
( षट्पद )
जीवत्वं चापिभव्यत्वमभव्यत्वं तथैव च ।
पारणामिकभावस्य भेदत्रितयमिष्यते ॥ ८ ॥
अनन्यभूतस्तस्य स्यादुपयोगो हि लक्षणम् ।
जीवोऽभिव्यज्यते तस्मादवष्टब्धोऽपि कर्मभिः ॥ ९ ॥
साकारश्च निराकारो भवति द्विविधश्च सः ।
साकार हि भवेज्ज्ञानं निराकारं तु दर्शनम् ॥ १० ॥
कृत्वा विशेषं गृह्णाति वस्तुजातं यतस्तत. ।
साकारमिष्यते ज्ञानं ज्ञानयाथात्म्यवेदिभिः ॥ ११ ॥
यद्विशेषमकृत्वैषं गृह्णीते वस्तुमात्रकम् ।
निराकारं ततः प्रोक्तं दर्शनं विश्वदर्शिभिः ॥ १२ ॥
ज्ञानमष्टविध ज्ञेयं मतिज्ञानादिभेदत. ।
चक्षुरादिविकल्पाच्च दर्शनं स्याच्चतुर्विधम् ॥ १३ ॥
संसारिणश्च मुक्ताश्च जीवास्तु द्विविधा स्मृता. ।
लक्षणं तत्र मुक्तानामुत्तरत्र प्रचक्ष्यते ॥ १४ ॥
सांप्रतं तु प्ररूप्यन्ते जीवाः संसारवर्तिनः।
जीवस्थानगुणस्थानमार्गणादिषु तत्त्वत. ॥ १५ ॥
मिथ्यादृक्सासनो मिश्रो संयतो देशसयत. ।

प्रमत्त इतरोऽपूर्वोनिवृत्तिकरणौ तथा ॥ १६ ॥
सूक्ष्मोपशान्तसंक्षीणकषाया योग्ययोगिनौ ।
गुणस्थानविकल्पा· स्युरिति सर्वे चतुर्दश ॥ १७ ॥
मिथ्यादृष्टिर्भवेज्जीवो मिथ्यादर्शनकर्मणा ।
उदयेन पदार्थानामश्रद्धान हि यत्कृतम् ॥ १८ ॥
मिथ्यात्वस्योदयाभावे जीवोऽनन्तानुबन्धिनाम् ।
उदयेनास्तसम्यक्त्व स्मृतः सासादनाभिध· ॥ १९ ॥
सम्यग्मिथ्यात्वसंज्ञायाः प्रकृतेरुदयाद्भवेत् ।
मिश्रभावतया सम्यग्मिथ्यादृष्टिः शरीरवान् ॥ २० ॥
वृत्तमोहस्य पाकेन जनिताविरतिर्भवेत् ।
जीव सम्यक्त्वसंयुक्त· सम्यग्दृष्टिरसयत· ॥ २१ ॥
पाकक्षयात्कषायाणामप्रत्याख्यानरोधिनाम् ।
विरताविरतो जीवः संयतासयत स्मृत ॥ २२ ॥
प्रमत्तसंयतो हि स्यात्प्रत्यास्यानिरोधिनाम् ।
उदयक्षयतः प्राप्त संयमर्द्धि प्रमादवान् ॥ २३ ॥
संयतो ह्यप्रमत्त स्यात्पूर्ववत्प्राप्तसंयम· ।
प्रमादविरहाद्वृत्तेर्वृत्तिमस्खलिता दधत् ॥ २४ ॥
अपूर्वकरण कुर्वन्नपूर्वकरणो यति ।
शमक· क्षपकश्चैव स भवत्युपचारत· ॥ २५ ॥
कर्मणां स्थूलभावे न शमक· क्षपकस्तथा ।
अनिवृत्तिरनिर्वृत्तिः परिणामवशाद्भवेत् ॥ २६ ॥
सूक्ष्मत्वेन कषायाणां शमनाक्षपणात्तथा ।
स्यात्सूक्ष्मसांपरायो हि सूक्ष्मलोभोदयानुग· ॥ २७ ॥
उपशान्तकषाय स्यात्सर्वमोहोपशान्तित· ।
भवेत्क्षीणकषायोऽपि मोहस्यात्यन्तसंक्षयात् ॥ २८ ॥
उत्पन्नकेवलज्ञानो घातिकर्मोदयक्षयात्

सयोगश्चाप्ययोगश्च स्यातां केवलिनावुभौ ॥ २९ ॥
एकाक्षा बादराः सूक्ष्मा द्व्यक्षाद्या विकलास्त्रयः ।
संज्ञिनोऽसंज्ञिनश्चैव द्विविधा पञ्चेन्द्रियास्तथा ॥ ३० ॥
पर्याप्ताः सर्व एवैते सर्वेऽपर्याप्तकास्तथा ।
जीवस्थानविकल्पाः स्युरिति सर्वे चतुर्दश ॥ ३१ ॥
आहारदेहकरणप्राणापानविभेदतः ।
वचोमनोविभेदाच्च सन्ति पर्याप्तयो हि षट् ॥ ३२ ॥
एकाक्षेषु चतस्रः स्युः पूर्वाः शेषेषु पञ्च ताः ।
सर्वा अपि भवन्त्येताः संज्ञिपञ्चेन्द्रियेषु तत् ॥ ३३ ॥
पञ्चेन्द्रियाणि वाक्कायमानसानां बलानि च ।
प्राणापानस्तथायुश्च प्राणाः स्युः प्राणिनां दश ॥ ३४ ॥
कायाक्षायूंषि सर्वेषु पर्याप्तेष्वान इष्यते ।
वाग्द्व्यक्षादिषु पूर्णेषु मनः पर्याप्तसंज्ञिषु ॥ ३५ ॥
आहारस्य भयस्यापि संज्ञा स्यान्मैथुनस्य च ।
परिग्रहस्य चेत्येवं भवेत्संज्ञा चतुर्विधा ॥ ३६ ॥
गत्यक्षकाययोगेषु वेद क्रोधादिवित्तिषु ।
वृत्तदर्शनलेश्यासु भव्यसम्यक्त्वसंज्ञिषु ।
आहारके च जीवाना मार्गणाः स्युश्चतुर्दश ॥ ३७ ॥
(षट्पदकम्)
गतिर्भवति जीवानां गतिकर्मविपाकजा ।
श्वभ्रतिर्यङ्नरामर्त्यगतिभेदाच्चतुर्विधा ॥ ३८ ॥
इन्द्रियं लिङ्गमिन्द्रस्य तच्च पञ्चविधं भवेत् ।
प्रत्येक तद्द्विधाद्द्रव्यभावेन्द्रियविकल्पतः ॥ ३९ ॥
निर्वृत्तिश्चोपकरणं द्रव्येन्द्रियमुदाहृतम् ।
बाह्याभ्यन्तरभेदेन द्वैविध्यमनयोरपि ॥ ४० ॥
नेत्रादीन्द्रियसंस्थानावस्थितानां हि वर्तनम् ।

विशुद्धात्मप्रदेशानां तत्र निर्वृत्तिरान्तरा ॥ ४१ ॥
तेष्वेवात्मप्रदेशेषु करणव्यपदेशिषु ।
नामकर्मकृतावस्थ पुद्गलप्रचयोऽपराः ॥ ४२ ॥
आभ्यन्तर भवेत्कृष्णशुक्लमण्डलकादिकम् ।
वाह्योपकरण त्वक्षिपक्ष्मपत्रद्वयादिकम् ॥ ४३ ॥
लब्धिस्तथोपयोगश्च भावेन्द्रियमुदाहृतम् ।
सा लब्धिर्वोधिरोधस्य य· क्षयोपशमो भवेत् ॥ ४४ ॥
स द्रव्येन्द्रियनिर्वृत्ति प्रति व्याप्रियते यत ।
कर्मणो ज्ञानरोधस्य क्षयोपशमहेतुक· ॥ ४५ ॥
आत्मनः परिणामो यः उपयोग· स कथ्यते ।
ज्ञानदर्शनभेदेन द्विधा द्वादशधा पुनः ॥ ४६ ॥
स्पर्शनं रसनं घ्राण चक्षु श्रोत्रमत· परम् ।
इतीन्द्रियाणां पञ्चानां संज्ञानुक्रमनिर्णय· ॥ ४७ ॥
स्पर्शो रसस्तथा गन्धो वर्ण· शब्दो यथाक्रमम् ।
विज्ञेया विषयास्तेषां मनसस्तु मतं श्रुतम् ॥ ४८ ॥
रूपं पश्यत्यसंस्पृष्टं स्पृष्टं शब्द शृणोति तु ।
वद्ध स्पृष्टं च जानाति स्पर्श गन्ध तथा रसम् ॥ ४९ ॥
यवनालमसूरातिमुक्तेन्द्वर्द्धसमा· क्रमात् ।
श्रोत्राक्षिघ्राणजिह्वा· स्यु· स्पर्शन नैकसस्थितिः ॥ ५० ॥
स्थावराणा भवत्येकमेकैकमभिवर्धयेत् ।
शम्बूककुन्थुमधुपमर्त्यादीना तत क्रमात् ॥ ५१ ॥
स्थावराः स्यु·पृथिव्यापस्तेजोवायुर्वनस्पति· ।
स्वैः स्वैर्भेदै समाख्येते सर्वे एकेन्द्रिया· स्मृताः ॥ ५२ ॥
शम्बूकः शङ्ख शुक्तिर्वा गण्डूपदकपर्दकाः ।
कुक्षिकृम्यादयश्चैते द्वीन्द्रिया प्राणिनो मताः ॥ ५३ ॥
कुन्थुः पिपीलिका कुम्भी वृश्चिकश्चेन्द्रगोपका ।

घुणमत्कुणयूकाद्यास्त्रीन्द्रियाः सन्ति जन्तवः ॥ ५४ ॥
मधुपः कीटको दंशमशकौ मक्षिकास्तथा ।
वरटी शलभाद्याश्च भवन्ति चतुरिन्द्रिया ॥ ५५ ॥
पञ्चेन्द्रियाश्च मर्त्याः स्युर्नारकास्त्रिदिवौकसः ।
तिर्यञ्चोऽप्युरगाभोगिपरिसर्पचतुष्पदा. ॥ ५६ ॥
मसूराम्बुपृषत्सूचीकलापध्वजसन्निभाः ।
धरातेजोमरुत्काया नानाकारास्तरुत्रसाः(?) ॥ ५७ ॥
मृत्तिका वालुका चैव शर्करा चोपलः शिला ।
लवणोदयस्तथा ताम्रं त्रपुः सीसकमेव च ॥ ५८ ॥
रौप्यं सुवर्णं वज्रं च हरितालं च हिङ्गुलं ।
मनःशिला तथा तुत्थमञ्जनं सप्रवालकम् ॥ ५९ ॥
क्रिरोलकाभ्रके चैव मणिभेदाश्च वादराः ।
गोमेदो रुचकाङ्कश्च स्फटिको लोहितः प्रभः ॥ ६० ॥
वैडूर्यं चन्द्रकान्तश्च जलकान्तो रविप्रभः ।
गैरिकश्चन्दनश्चैव वर्चूरोरुचकेस्तथा ॥ ६१ ॥
मोठोमसारगल्लश्च सर्वे एते प्रदर्शिताः ।
षड्विंशत्पृथिवीभेदा भगवद्भिर्जिनेश्वरैः ॥ ६२ ॥
अवश्यायो हिमबिन्दुस्तथा शुद्धघनोदके ।
शीतकाद्याश्च विज्ञेया जीवा. सलिलकायिकाः ॥ ६३ ॥
ज्वालाङ्गारास्तथार्चिश्च मुर्मुरः शुद्ध एव च ।
अग्निश्चेत्यादिका ज्ञेया जीवा ज्वलनकायिकाः ॥ ६४ ॥
महान् घनतनुश्चैव गुञ्जामण्डलिरुत्कलिः ।
वातश्चेत्यादयो ज्ञेया जीवा. पवनकायिकाः ॥ ६५ ॥
मूलाग्रपर्वकन्दोत्थाः स्कन्धबीजरुहास्तथा ।
सम्मूर्छिनश्च हरिता प्रत्येकानन्तकायिकाः ॥ ६६ ॥
सति वीर्यान्तरायस्य क्षयोपशमसम्भवे ।

योगो ह्यात्मप्रदेशानां परिस्पन्दो निगद्यते ॥ ६७ ॥
चत्वारो हि मनोवाग्योगायोगानां चतुष्टयम् ।
काययोगाश्च सप्तैव योगाः पञ्चदशोदिताः ॥ ६८ ॥
मनोयोगो भवेत्सत्यो मृषासत्यमृषा तथा ।
तथा सत्यमृषा चेति मनोयोगश्चतुर्विधः ॥ ६९ ॥
वचोयोगो भवेत्सत्यो मृषासत्यमृषा तथा ।
तथा सत्यमृषा चेति वचोयोगश्चतुर्विधः ॥ ७० ॥
औदारिको वैक्रियकः कायश्चाहारकश्च ते ।
मिश्राश्च कार्मणं चैव काययोगोऽपि सप्तधा ॥ ७१ ॥
औदारिको वैक्रियकस्तथाहारक एव च ।
तैजस. कार्मणश्चैवं सूक्ष्माः सन्ति यथोत्तरम् ॥ ७२ ॥
असख्येयगुणौ स्यातामाद्यादन्यौ प्रदेशतः ।
यथोत्तरं तथानन्तगुणौ तैजसकार्मणौ ॥ ७३ ॥
उभौ निरुपयोगौ तौ प्रतिघातविवर्जितौ ।
सर्वस्यानादिसम्बन्धौ स्यातां तैजसकार्मणौ ॥ ७४ ॥
तौ भवेतां क्वचिच्छुद्धौ क्वचिदौदारिकाधिकौ ।
क्वचिद्वैक्रियकोपेतौ तृतीयाद्ययुतौ क्वचित् ॥ ७५ ॥
औदारिकशरीरस्य लब्धिप्रत्ययमिष्यते ।
अन्यादृक् तैजसं साधोर्वपुर्वैक्रियकं तथा ॥ ७६ ॥
औदारिकं शरीरं स्याद्गर्भसम्मूर्छनोद्भवम् ।
तथा वैक्रियकाख्यं तु जानीयादौप५..ँकम् ॥ ७७ ॥
अव्याघाती शुभः शुद्धः प्रासर्द्धैर्यः प्रजायते ।
सयतस्य प्रमत्तस्य स खल्वाहारक. स्मृतः ॥ ७८ ॥
भाववेदस्त्रिवेद स्यान्नोकपायविपाकज ।
नामोदयनिमित्तस्तु द्रव्यभेद' स च त्रिधा ॥ ७९ ॥
द्रव्यान्नपुंसकानि स्युः श्वाभ्रा. सम्मूर्छिनस्तथा ।

पल्यायुषो न देवाश्च त्रिवेदा इतरे पुनः ॥ ८० ॥
उत्पादः खलु देवीनामैशानो यावदिष्यते ।
गमनं त्वच्युतं यावत् पुंवेदा हि ततः परम् ॥ ८१ ॥
चारित्रपरिणामानां कषायः कषणान्मतः ।
क्रोधोमानस्तथा माया लोभश्चेति चतुर्विधः ॥ ८२ ॥
तत्त्वार्थस्यावबोधो हि ज्ञानं पञ्चविधं भवेत् ।
मिथ्यात्वपाककलुषमज्ञानं त्रिविधं पुनः ॥ ८३ ॥
संयमः खलु चारित्रमोहस्योपशमादिभिः ।
प्राण्यक्षपरिहारः स्यात् पञ्चधा स च वक्ष्यते ॥ ८४ ॥
विरताविरतत्वेन संयमासंयमः स्मृतः ।
प्राणिघाताक्षविषयभावेन स्यादसंयमः ॥ ८५ ॥
दर्शनावरणस्य स्यात् क्षयोपशमसन्निधौ ।
आलोचनं पदार्थानां दर्शनं तच्चतुर्विधम् ॥ ८६ ॥
चक्षुर्दर्शनमेकं स्यादचक्षुर्दर्शन तथा ।
अवधिर्दर्शनं चैव तथा केवलदर्शनम् ॥ ८७ ॥
योगवृत्तिर्भवेल्लेश्या कषायोदयरञ्जिता ।
भावतो द्रव्यतः कायनामोदयकृताङ्गरुक् ॥ ८८ ॥
कृष्णा नीलाथकापोता पीता पद्मा तथैव च ।
शुक्ला चेति भवत्येषा द्विविधापि हि षड्विधा ॥ ८९ ॥
भव्याभव्यविभेदेन द्विविधा सन्ति जन्तवः ।
भव्याः सिद्धत्वयोगाः स्युर्विपरीतास्तथापरे ॥ ९० ॥
सम्यक्तं खलु तत्त्वार्थश्रद्धानं तत्रिधा भवेत् ।
स्यात्सासादनसम्यक्त्वं पाकेऽनन्तानुबन्धिनाम् ॥ ९१ ॥
सम्यग्मिथ्यात्वपाकेन सम्यग्मिथ्यात्वमिष्यते ।
मिथ्यात्वमुदयेनोक्तं मिथ्यादर्शनकर्मणः ॥ ९२ ॥
यो हि शिक्षाक्रियात्मार्थग्राही संज्ञी स उच्यते ।

अतस्तु विपरीतो यः सोऽसंज्ञी कथितो जिनैः ॥ ९३ ॥
गृह्णाति देहपर्याप्तियोग्यान्य. खलु पुद्गलान् ।
आहारकः स विज्ञेयस्ततोऽनाहारकोऽन्यथा ॥ ९४ ॥
अस्त्यनाहारको योगः समुद्घातगतः परम् ।
साशनो विग्रहगतौ मिथ्यादृष्टिस्तथावृतः ॥ ९५ ॥
विग्रहो हि शरीरं स्यात्तदर्थं या गतिर्भवेत् ।
विशीर्णपूर्वदेहस्य सा विग्रहगतिः स्मृता ॥ ९६ ॥
जीवस्य विग्रहगतौ कर्मयोग जिनेश्वराः ।
प्राहुर्देहान्तरप्राप्तिः कर्मग्रहणकारणम् ॥ ९७ ॥
जीवानां पञ्चताकाले यो भवान्तरसंक्रमः ।
मुक्तानां चोर्ध्वगमनमनुश्रेणिगतिस्तयोः ॥ ९८ ॥
सविग्रहाऽविग्रहा च सा विग्रहगतिर्द्विधा ।
अविग्रहैव मुक्तस्य शेषस्यानियमः पुनः ॥ ९९ ॥
अविग्रहैकसमया कथितेषुगतिर्जिनैः ।
अन्या द्विसमया प्रोक्ता पाणिमुक्तैकविग्रहा ॥ १०० ॥
द्विविग्रहां त्रिसमयां प्राहुर्लाङ्गलिकां जिना. ।
गोमूत्रिका तु समयैश्चतुर्भिः स्यात्त्रिविग्रहा ॥ १०१ ॥
समयं पाणिमुक्तायामन्यस्यां समयद्वयम् ।
तथा गोमूत्रिकायां त्रीननाहारक इष्यते ॥ १०२ ॥
त्रिविधं जन्म जीवानां सर्वज्ञैः परिभाषितम् ।
सम्मूर्छनात्तथा गर्भादुपपादात्तथैव च ॥ १०३ ॥
भवन्ति गर्भजन्मान. पोताण्डजजरायुजाः ।
तथोपपादजन्मानो नारकास्त्रिदिवौकसः ॥ १०४ ॥
स्युः सम्मूर्छनजन्मानः परिशिष्टास्तथाऽपरे ।
योनयो नव निर्दिष्टास्त्रिविधस्यापि जन्मनः ॥ १०५ ॥
सचित्तशीतविवृता अचित्ताशीतसंवृताः ।

सचित्ताचित्तशीतोष्णौ तथा विवृतसंवृत॰ ॥ १०६ ॥
योनिर्नारकदेवानामचित्तः कथितो जिनैः ।
गर्भजानां पुनर्मिश्र॰ शेषाणां त्रिविधो भवेत् ॥ १०७ ॥
उष्णः शीतश्च देवानां नारकाणां च कीर्तितः ।
उष्णोऽग्निकायिकानांतु शेषाणां त्रिविधो भवेत् ॥ १०८ ॥
नारकैकाक्षदेवानां योनिर्भवति संवृत॰ ।
विवृतो विकलाक्षाणां मिश्रः स्याद्गर्भजन्मनाम् ॥ १०९ ॥
नित्येतरनिगोतानां भूम्यम्भोवाततेजसाम् ।
सप्त सप्त भवन्त्येषां लक्षाणि दश शाखिनाम् ॥ ११० ॥
षट् तथा विकलाक्षाणां मनुष्याणां चतुर्दश ।
तिर्यङ्नारकदेवानामेकैकस्य चतुष्टयम् ।
एवं चतुरशीतिः स्याल्लक्षाणां जीवयोनयः ॥ १११ ॥
( षट्पदम् )

द्वाविंशतिस्तथा सप्त त्रीणि सप्त यथाक्रमम् ।
कोटीलक्षाणि भूम्यम्भस्तेजोऽनिलशरीरिणाम् ॥ ११२ ॥
वनस्पतिशरीराणां तान्यष्टाविंशति॰ स्मृताः ।
स्युर्द्वित्रिचतुरक्षाणां सप्ताष्ट नव च क्रमात् ॥ ११३ ॥
तानि द्वादश सार्द्धानि भवन्ति जलचारिणाम् ।
नवाहिपरिसर्पाणां गवादीनां तथा दश ॥ ११४ ॥
वीनां द्वादश तानि स्युश्चतुर्दश नृणामपि ।
षड्विंशतिः सुराणां तु श्वाभ्राणां पञ्चविंशतिः ॥ ११५ ॥
कुलानां कोटिलक्षाणि नवतिर्नवभिस्तथा ।
पञ्चायुतानि कोटीनां कोटिकोटी च मीलनात् ॥ ११६ ॥
द्वाविंशतिर्भुवां सप्त पयसां दश शाखिनाम् ।
नभस्वतां पुनस्त्रीणि वीनां द्वासप्ततिस्तथा ॥ ११७ ॥
उरगाणां द्विसंयुक्ता चत्वारिंशत्सकर्पतः ।

आयुर्वर्षसहस्राणि सर्वेषां परिभाषितम् ॥ ११८ ॥
दिनान्येकोनपञ्चाशत्त्र्यक्षाणां त्रीणि तेजसः ।
षण्मासाश्चतुरक्षाणां भवत्यायुः प्रकर्षतः ॥ ११९ ॥
नवायुः परिसर्पाणां पूर्वाङ्गानि प्रकर्षतः ।
द्व्यक्षाणां द्वादशाब्दानि जीवितं स्यात्प्रकर्षतः॥ १२० ॥
असंज्ञिनस्तथा मत्स्याः कर्मभूजाश्चतुष्पदाः ।
मनुष्याश्चैव जीवन्ति पूर्वकोटिं प्रकर्षतः ॥ १२१ ॥
एकं द्वे त्रीणि पल्यानि नृतिरश्चां यथाक्रमम् ।
जघन्यमध्यमोत्कृष्टभोगभूमिषु जीवितम् ॥
कुभोगभूमिजानां तु पल्यमेकं तु जीवितम् ॥ १२२ ॥
(षट्पदम् ।)

एकं त्रीणि तथा सप्त दश सप्तदशेति च ।
द्वाविंशतिस्त्रयस्त्रिंशद् घर्मादिषु यथाक्रमम् ॥ १२३ ॥
स्यात्सागरोपमाण्यायुर्नारकाणां प्रकर्षतः ।
दशवर्षसहस्राणि घर्मायां तु जघन्यतः ॥ १२४ ॥
वंशादिषु तु तान्येक त्रीणि सप्त तथा दश ।
तथा सप्तदश व्यग्रा विंशतिश्च यथोत्तरम् ॥ १२५ ॥
भावनानां भवत्यायुः प्रकृष्टं सागरोपमम् ।
दशवर्षसहस्रं तु जघन्यं परिभाषितम् ॥ १२६ ॥
पल्योपमं भवत्यायुः सातिरेकं प्रकर्षतः ।
दशवर्षसहस्रं तु व्यन्तराणां जघन्यतः ॥ १२७ ॥
पल्योपमं भवत्यायुः सातिरेकं प्रकर्षतः ।
पल्योपमाष्टभागस्तु ज्योतिष्काणां जघन्यतः ॥ १२८ ॥
द्वयोर्द्वयोरुभौ सप्त दश चैव चतुर्दश ।
षोडशाष्टादशाप्येते सातिरेकाः पयोधयः ॥ १२९ ॥
समुद्रा विंशतिश्चैव तेषां द्वाविंशतिस्तथा ।

सौधर्मादिषु देवानां भवत्यायुः प्रकर्षतः ॥ १३० ॥
एकैकं वर्द्धयेदब्धिं नवग्रैवेयकेष्वतः ।
नवस्वनुदिशेषु स्याद्द्वात्रिंशदविशेषतः ॥ १३१ ॥
त्रयस्त्रिंशत्समुद्राणां विजयादिषु पञ्चसु ।
साधिकं पल्यमायुः स्यात्सौधर्मैशानयोर्द्वयोः ॥ १३२ ॥
परतः परतः पूर्वं शेषेषु च जघन्यतः ।
आयुः सर्वार्थसिद्धौ तु जघन्यं नैव विद्यते ॥ १३३ ॥
अन्यत्रानपमृत्युभ्यः सर्वेषामपि देहिनाम् ।
अन्तर्मुहूर्त्तमित्येषां जघन्येनायुरिष्यते ॥ १३४ ॥
असङ्ख्येयसमायुष्काश्चरमोत्तममूर्त्तयः ।
देवाश्च नारकाश्चैषामपमृत्युर्न विद्यते ॥ १३५ ॥
घर्मायां सप्त चापानि सपादं च करत्रयम् ।
उत्सेधः स्यात्ततोऽन्यासु द्विगुणो द्विगुणो हि सः ॥ १३६ ॥
शतानि पञ्च चापानां पञ्चविंशतिरेव च ।
प्रकर्षेण मनुष्याणामुत्सेधः कर्मभूमिषु ॥ १३७ ॥
एकः क्रोशो जघन्यासु द्वौ क्रोशौ मध्यमासु च ।
क्रोशत्रयं प्रकृष्टासु भोगभूषु समुन्नति ॥ १३८ ॥
ज्योतिष्काणां स्मृताः सप्तासुराणां पञ्चविंशतिः ।
शेषभावनभौमानां कोदण्डानि दशोन्नतिः ॥ १३९ ॥
द्वयोः सप्त द्वयोः षड् च हस्ताः पञ्च चतुर्थतः ।
ततश्चतुर्षु चत्वारः सार्द्धाश्चात्तो द्वयोस्त्रयः ॥ १४० ॥
द्वयोस्त्रयश्च कल्पेषु समुत्सेधः सुधाशिनाम् ।
अधोग्रैवेयकेषु स्यात्सार्द्धं हस्तद्वयं यथा ॥ १४१ ॥
हस्तद्वितयमुत्सेधो मध्यग्रैवेयकेषु तु ।
अन्त्यग्रैवेयकेषु स्याद्धस्तोऽध्यर्द्धसमुन्नतिः ।
एकहस्तसमुत्सेधो विजयादिषु पञ्चसु ॥ १४२ ॥ (षट्पदम्)

योजनानां सहस्रं तु सातिरेकं प्रकर्षतः ।
एकेन्द्रियस्य देहः स्याद्विज्ञेयः स च पद्मिनि ॥ १४३ ॥
त्रिकोश' कथितः कुम्भी शङ्खो द्वादशयोजनः ।
सहस्रयोजनो मत्स्यो मधुपश्चैकयोजनः ॥ १४४ ॥
असङ्ख्याततमो भागो यावानस्त्यङ्गुलस्य तु ।
एकाक्षादिषु सर्वेषु देहस्तावान् जघन्यतः ॥ १४५ ॥
घर्मामसञ्ज्ञिनो यान्ति वंशान्ताश्च सरीसृपाः ।
शैलान्ते च विहङ्गाश्च अञ्जनान्ताश्च भोगिनः ॥ १४६ ॥
तामरिष्टां च सिंहास्तु मघव्यन्तास्तु योषितः ।
नरा मत्स्याश्च गच्छन्ति माघवीं तांश्च पापिन. ॥ १४७ ॥
न लभन्ते मनुष्यत्वं सप्तम्या निर्गताः क्षितेः ।
तिर्यक्त्वे च समुत्पद्य नरकं यान्ति ते पुन ॥ १४८ ॥
म॰व्या मनुष्यलाभेन षष्ठ्या भूमेर्विनिर्गताः ।
संयम तु पुनः पुण्यं नाप्नुवन्तीति निश्चयः ॥ १४९ ॥
निर्गता. खलु पञ्चम्या लभन्ते केचन व्रतम् ।
प्रयान्ति न पुनर्मुक्ति भावसंक्लेशयोगतः ॥ १५० ॥
लभन्ते निर्वृति केचिच्चतुर्थ्या निर्गताः क्षितेः ।
न पुनः प्राप्नुवन्त्येव पवित्रां तीर्थकर्तृताम् ॥ १५१ ॥
लभन्ते तीर्थकर्तृत्वं ततोऽन्याऽभ्यो विनिर्गताः ।
निर्गत्य नारका न स्युर्बलकेशवचक्रिणः ॥ १५२ ॥
सर्वे पर्याप्तका जीवाः सूक्ष्मकायाश्च तैजसाः ।
वायवो संज्ञिनश्चैषां न तिर्यग्भ्यो विनिर्गमः ॥ १५३ ॥
त्रयाणां खलु कायानां विकलानामसंज्ञिनाम् ।
मानवानां तिरश्चां वाऽविरुद्ध. सङ्क्रमो मिथः ॥ १५४ ॥
नारकाणां सुराणां च विरुद्ध. सङ्क्रमो मिथ. ।

नारको न हि देवः स्यान्न देवो नारको भवेत् ॥ १५५ ॥
भूम्यापः स्थूलपर्याप्ताः प्रत्येकाङ्गवनस्पतिः ।
तिर्यग्मानुषदेवानां जन्मैषां परिकीर्त्तितम् ॥ १५६ ॥
सर्वेऽपि तैजसा जीवाः सर्वे चानिलकायिकाः ।
मनुजेषु न जायन्ते ध्रुवं जन्मन्यनन्तरे ॥ १५७ ॥
पूर्णासञ्ज्ञितिरश्चामविरुद्धं जन्म जातुचित् ।
नारकामरतिर्यक्षु नृषु वा न तु सर्वतः ॥ १५८ ॥
सङ्ख्यातीतायुषां मर्त्यतिरश्चां तेभ्य एव तु ।
सङ्ख्यातवर्षजीविभ्यः सञ्ज्ञिभ्यो जन्मसंस्मृतम् ॥ १५९ ॥
सङ्ख्यातीतायुषां नूनं देवेष्वेवास्ति संक्रमः ।
निसर्गेण भवेत्तेषां यतो मन्दकषायता ॥ १६० ॥
शलाकापुरुषा नैव सन्त्यनन्तरजन्मनि ।
तिर्यञ्चो मानुषाश्चैव भाज्याः सिद्धगतौ तु ते ॥ १६१ ॥
ये मिथ्यादृष्टयो जीवाः सञ्ज्ञिनोऽसंज्ञिनोऽथवा ।
व्यन्तरास्ते प्रजायन्ते तथा भवनवासिनः ॥ १६२ ॥
सङ्ख्यातीतायुषो मर्त्यास्तिर्यञ्चश्चाप्यसद्दृशः ।
उत्कृष्टास्तापसाश्चैव यान्ति ज्योतिष्कदेवताम् ॥ १६३ ॥
ब्रह्मलोके प्रजायन्ते परिव्राजः प्रकर्षतः ।
आजीवास्तु सहस्रारं प्रकर्षेण प्रयान्ति हि ॥ १६४ ॥
उत्पद्यन्ते सहस्रारे तिर्यञ्चो व्रतसयुता. ।
अत्रैव हि प्रजायन्ते सम्यक्त्वाराधका नराः ॥ १६५ ॥
न विद्यते परं ह्यस्मादुपपादोऽन्यलिङ्गिनाम् ।
निर्ग्रन्थश्रावका ये ते जायन्ते यावदच्युतम् ॥ १६६ ॥
धृत्वा निर्ग्रन्थलिङ्गं ये प्रकृष्टं कुर्वते तपः ।
अन्त्यग्रैवेयकं यावदभव्याः खलु यान्ति ते ॥ १६७ ॥
यावत्सर्वार्थसिद्धिं तु निर्ग्रन्था हि तत. परम् ।

उत्पद्यन्ते तपोयुक्ता रत्नत्रयपवित्रिताः ॥ १६८ ॥
भाज्या एकेन्द्रियत्वेन देवा ऐशानतश्च्युता. ।
तिर्यक्त्वमानुषत्वाभ्यामासहस्रारतः पुनः ॥ १६९ ॥
ततः परं तु ये देवास्ते सर्वेऽनन्तरे भवे ।
उत्पद्यन्ते मनुष्येषु न हि तिर्यक्षु जातुचित् ॥ १७० ॥
शलाकापुरुषा न स्युर्भौमज्योतिष्कभावनाः ।
अनन्तरभवे तेषां भाज्या भवति निर्वृतिः ॥ १७१ ॥
ततः परं विकल्प्यन्ते यावद्ग्रैवेयक सुराः ।
शलाकापुरुषत्वेन निर्वाणगमनेन च ॥ १७२ ॥
तीर्थेशरामचक्रित्वे निर्वाणगमनेन च ।
च्युताः सन्तो विकल्प्यन्तेऽनुदिशानुत्तरामराः ॥ १७३ ॥
भाज्यास्तीर्थेशचक्रित्वे च्युताः सर्वार्थसिद्धितः ।
विकल्परामभावेऽपि सिध्यन्ति नियमात्पुनः ॥ १७४ ॥
दक्षिणेन्द्रास्तथा लोकपाला लौकान्तिकाः शची ।
शक्रश्च नियमाच्च्युत्वा सर्वे ते यान्ति निर्वृतिम् ॥ १७५ ॥
धर्माधर्मास्तिकायाभ्यां व्याप्तः कालाणुभिस्तथा ।
व्योम्नि पुद्गलसंछन्नो लोकः स्यात् क्षेत्रमात्मनाम् ॥ १७६ ॥
अधो वेत्रासनाकारो मध्येऽसौ झल्लरीसम. ।
ऊर्ध्वं मृदङ्गसंस्थानो लोकः सर्वज्ञवर्णितः ॥ १७७ ॥
सर्वसामान्यतो लोकस्तिरश्चां क्षेत्रमिष्यते ।
श्वाभ्रमानुषदेवानामथातस्तद्विभज्यते ॥ १७८ ॥
अधोभागे हि लोकस्य सन्ति रत्नप्रभादयः ।
घनाम्बुपवनाकाशे प्रतिष्ठाः सप्तभूमय ॥ १७९ ॥
रत्नप्रभादिमा भूमिस्ततोऽधः शर्कराप्रभा ।
स्याद्वालुकाप्रभाततोऽधस्तत· पङ्कप्रभा मता ॥ १८० ॥
ततो धूमप्रभाधस्तात्ततोऽधस्तात्तमःप्रभा ।

तमस्तमःप्रभातोऽधो भुवामित्थं व्यवस्थितिः ॥ १८१ ॥
त्रिंशन्नरकलक्षाणि भवन्त्युपरिमक्षितौ ।
अधः पञ्चकृतिस्तस्यास्ततोऽधो दशपञ्च च ॥ १८२ ॥
ततोऽधो दशलक्षाणि त्रीणि लक्षाण्यधस्ततः ।
पञ्चोनं लक्षमेकं तु ततोऽधः पञ्च तान्यतः ॥ १८३ ॥
परिणामवपुर्लेश्यावेदनाविक्रियादिभिः ।
अत्यन्तमशुभैर्जीवा भवन्त्येतेषु नारकाः ॥ १८४ ॥
अन्योन्योदीरितासह्यदुःखभाजो भवन्ति ते ।
संक्लिष्टासुरनिर्वृत्तदु खाश्चोर्ध्वक्षितित्रये ॥ १८५ ॥
पाकान्नरकगत्यास्ते तथा च नरकायुष. ।
भुञ्जन्ते दुःकृतं घोरं चिर सप्तक्षितिस्थिताः ॥ १८६ ॥
मध्यभागे तु लोकस्य तिर्यक्प्रचयवर्द्धिनः ।
असङ्ख्याः शुभनामानो भवन्ति द्वीपसागराः ॥ १८७ ॥
जम्बूद्वीपोऽस्ति तन्मध्ये लक्षयोजनविस्तरः ।
आदित्यमण्डलाकारो बहुमध्यस्थमन्दरः ॥ १८८ ॥
द्विगुणद्विगुणेनातो विष्कम्भेणार्णवादयः ।
पूर्वं पूर्वं परिक्षिप्य वलयाकृतयः स्थिताः ॥ १८९ ॥
जम्बूद्वीपं परिक्षिप्य लवणोदः स्थितोऽर्णवः ।
द्वीपस्तु धातकीखण्डस्तं परिक्षिप्य संस्थितः ॥ १९० ॥
आवेष्ट्य धातकीखण्डं स्थितः कालोदसागरः ।
आवेष्टय पुष्करद्वीपः स्थित कालोदसागरम् ॥ १९१ ॥
परिपाट्यानया ज्ञेयाः स्वयम्भूरमणोदधिः ।
यावज्जिनाज्ञया भव्यैरसङ्ख्या द्वीपसागराः ॥ १९२ ॥
सप्त क्षेत्राणि भरतस्तथा हैमवतो हरिः ।
विदेहो रम्यकश्चैव हैरण्यवत एव च ।
ऐरावतश्च तिष्ठन्ति जम्बूद्वीपे यथाक्रमम् ॥ १९३ ॥ (षट्पदम्

पार्श्वेषु मणिभिश्चित्रा ऊर्ध्वाधस्तुल्यविस्तराः ।
तद्विभागकराः षट् स्युः शैलाः पूर्वापरायताः ॥ १९४ ॥
हिमवान्महाहिमवान्निषधो नीलरुक्मिणौ ।
शिखरी चेति संचिन्त्या एते वर्षधराद्रयः ॥ १९५ ॥
कनकार्जुनकल्याणवैडूर्यार्जुनकाञ्चनैः ।
यथाक्रमेण निर्वृत्ताश्चिन्त्यास्ते षण्महीधराः ॥ १९६ ॥
पद्मस्तथा महापद्मस्तिगिंछ' केशरी तथा ।
पुण्डरीको महान् क्षुद्रो ह्रदा वर्षधराद्रिषु ॥ १९७ ॥
सहस्रयोजनायाम आद्यस्तस्यार्द्धविस्तरः ।
द्वितीयो द्विगुणस्तस्मात्तृतीयो द्विगुणस्ततः ॥ १९८ ॥
उत्तरा दक्षिणैस्तुल्या निम्नास्ते दशयोजनीम् ।
प्रथमे परिमाणेन योजनं पुष्करं ह्रदे ॥ १९९ ॥
द्विचतुर्योजनं ज्ञेयं तद्वितीयतृतीययोः ।
अपाच्यवदुदीच्यानां पुष्कराणां प्रमाश्रिताः ॥ २०० ॥
श्रीश्च ह्रीश्च धृतिः कीर्त्तिर्बुद्धिर्लक्ष्मीश्च देवताः ।
पल्योपमायुषस्तेषु पर्षत्सामानिकान्विताः ॥ २०१ ॥
गङ्गासिन्धू उभे रोहिद्रोहितास्ये तथैव च ।
स्तो हरिद्धरिकान्ते च शीताशीतोदके तथा ॥ २०२ ॥
स्तो नारीनरकान्ते च सुवर्णार्जुनकूलिके ।
रक्तारक्तोदके च स्तो द्वे द्वे क्षेत्रे च निम्नगे ॥ २०३ ॥
पूर्वसागरगामिन्यः पूर्वा नद्यो द्वयोर्द्वयोः ।
पश्चिमार्णवगामिन्यः पश्चिमास्तु तयोर्मताः ॥ २०४ ॥
गङ्गासिन्धुपरीवारः सहस्राणि चतुर्दश ।
नदीनां द्विगुणास्तिस्रस्तिसृतोऽर्द्धार्द्धहापनम् ॥ २०५ ॥
दशोनद्विशतीभक्तो जम्बूद्वीपस्य विस्तर ।

विस्तारो भरतस्यासौ दक्षिणोत्तरतः स्मृतः ॥ २०६ ॥
द्विगुणद्विगुणा वर्षधरवर्षास्ततो मताः ।
आविदेहात्ततस्तु स्युरुत्तरा दक्षिणैः समाः ॥ २०७ ॥
उत्सर्पिण्यवसर्पिण्यौ षट्समे वृद्धिहानिदे ।
भरतैरावतौ मुक्त्वा नान्यत्र भवतः क्वचित् ॥ २०८ ॥
जम्बूद्वीपोक्तसख्याभ्यो वर्षा वर्षधरा अपि ।
द्विगुणा धातकीखण्डे पुष्करार्द्धे च निश्चिताः ॥ २०९ ॥
पुष्करद्वीपमध्यस्थो मानुषोत्तरपर्वतः ।
श्रूयते वलयाकारस्तस्य प्रागेव मानुषाः ॥ २१० ॥
द्वीपेष्वर्धतृतीयेषु द्वयोश्चापि समुद्रयोः ।
निवासोऽत्र मनुष्याणामत एव नियम्यते ॥ २११ ॥
आर्यम्लेच्छविभेदेन द्विविधास्ते तु मानुषाः।
आर्यखण्डोद्भवा आर्या म्लेच्छाः केचिच्छकादयः ।
म्लेच्छखण्डोद्भवा म्लेच्छा अन्तरद्वीपजा अपि ॥ २१२ ॥

षट्पदम् ।

भावनव्यन्तरज्योतिर्वैमानिकविभेदतः ।
देवाश्चतुर्णिकायाः स्युर्नामकर्मविशेषतः ॥ २१३ ॥
दशधा भावना देवा अष्टधा व्यन्तराः स्मृताः।
ज्योतिष्काः पञ्चधा ज्ञेयाः सर्वे वैमानिका द्विधा ॥ २१४ ॥
नागासुरसुपर्णाग्निदिग्वातस्तनितोदधिः ।
द्वीपविद्युत्कुमाराख्या दशधा भावना स्मृताः ॥ २१५ ॥
किन्नराः किम्पुरुषाश्च गन्धर्वाश्च महोरगाः ।
यक्षराक्षसभूताश्च पिशाचा व्यन्तराः स्मृताः ॥ २१६ ॥
सूर्याचन्द्रमसौ चैव ग्रहनक्षत्रतारका. ।
ज्योतिष्काः पञ्चधा द्वेधा ते चलाचलभेदतः ॥ २१७ ॥
कल्पोत्पन्नास्तथा कल्पातीता वैमानिका द्विधा ।

इन्द्राः सामानिकाश्चैव त्रायस्त्रिंशाश्च पार्षदाः ॥ २१८ ॥
आत्मरक्षास्तथा लोकपालानीकप्रकीर्णकाः ।
किल्विषा आभियोग्याश्च भेदाः प्रतिनिकायकाः ॥ २१९ ॥
त्रायस्त्रिंशैस्तथा लोकपालैर्विरहिताः परे ।
व्यन्तरज्योतिषामष्टौ भेदाः सन्तीति निश्चिताः ॥ २२० ॥
पूर्वे कायप्रवीचारा व्याप्यैशान सुराः स्मृताः ।
स्पर्शरूपध्वनिस्वान्तप्रवीचारास्ततः परे ।
ततः परेऽप्रवीचाराः कामक्लेशाल्पभावतः ॥ २२१ ॥ षट्पदम् ।
घर्मायाः प्रथमे भागे द्वितीयेऽपि च कानिचित् ।
भवनानि प्रसिद्धानि वसन्त्येतेषु भावनाः ॥ २२२ ॥
रत्नप्रभाभुवो मध्ये तथोपरितलेऽपि च ।
विविधेष्वन्तरेष्वत्र व्यन्तरा निवसन्ति ते ॥ २२३ ॥
उपरिष्टान्महीभागात् पटलेषु नभोऽङ्गणे ।
तिर्यग्लोकं समाच्छाद्य ज्योतिष्का निवसन्ति ते ॥ २२४ ॥
ये तु वैमानिका देवा ऊर्ध्वलोके वसन्ति ते ।
उपर्युपरि तिष्ठत्सु विमानप्रतरेष्विह ॥ २२५ ॥
ऊर्ध्वभागे हि लोकस्य त्रिषष्टिः प्रतरा. स्मृताः ।
विमानैरिन्द्रकैर्युक्ता· श्रेणीवद्धैः प्रकीर्णकै. ॥ २२६ ॥
सौधर्मैशानकल्पौ द्वौ तथा सानत्कुमारकः ।
माहेन्द्रश्च प्रसिद्धौ द्वौ ब्रह्मब्रह्मोत्तरावुभौ ॥ २२७ ॥
उभौ लान्तवकापिष्टौ शुक्रशुक्रौ महास्वनौ ।
द्वौ सतारसहस्रारावानतप्राणतावुभौ ॥ २२८ ॥
आरणाच्युतनामानौ द्वौ कल्पाश्चेति षोडश ।
ग्रैवेयाणि नवातोऽतो नवानुदिशचक्रकम् ॥ २२९ ॥
विजयं वैजयन्त च जयन्तमपराजितम् ।
सर्वार्थसिद्धिरित्येषां पञ्चानां प्रतरोऽन्तिमः ॥ २३० ॥

एषु वैमानिका देवा जायमानाः स्वकर्मभिः ।
द्युतिलेश्याविशुद्ध्यायुरिन्द्रियावधिगोचरैः ॥ २३१ ॥
तथा सुखप्रभावाभ्यामुपर्युपरितोऽधिकाः ।
हीनास्तथैव ते मानगतिदेहपरिग्रहैः ॥ २३२ ॥
इति संसारिणां क्षेत्रं सर्वलोकः प्रकीर्त्तितः ।
सिद्धानां तु पुनः क्षेत्रमूर्द्ध्वलोकान्त इष्यते ॥ २३३॥
सामान्यादेकधा जीवो बद्धो मुक्तस्ततो द्विधा ।
स एवासिद्धनोसिद्धसिद्धत्वात् कीर्त्यते त्रिधा ॥ २३४ ॥
श्वाभ्रतिर्यङ्नरामर्त्यविकल्पात् स चतुर्विध ।
प्रशमक्षयतद्द्वन्द्वः परिणामोदयो भवेत् ॥ २३५ ॥
भावः पञ्चविधत्वात्स पञ्चभेदः प्ररूप्यते ।
षण्मार्गगमनात्षोढा सप्तधा सप्तभङ्गतः ॥ २३६ ॥
अष्टधाष्टगुणात्मत्वादष्टकर्मकृतोऽपि च ।
पदार्थनवकात्मत्वान्नवधा दशधा तु सः ।
दशजीवभिदात्मत्वादिति चिन्त्यं यथागमम् ॥ २३७ ॥ षट्पदम् ।
इत्येतज्जीवतत्त्वं यः श्रद्धत्ते वेत्त्युपेक्षते ।
शेषतत्त्वैः समं षड्भिः स हि निर्वाणभाग्भवेत् ॥ २३८ ॥

इति जीवतत्त्ववर्णनम् ॥ २ ॥

---

अनन्तकेवलज्योतिःप्रकाशितजगत्त्रयान् ।
प्रणिपत्य जिनान् सर्वानजीवाः सम्प्रचक्ष्यते ॥ १ ॥
धर्माधर्मौ तथाकाशं तथा कालश्च पुद्गलाः ।
अजीवाः खलु पञ्चैते निर्दिष्टाः सर्वदर्शिभिः ॥ २ ॥
एते धर्मादयः पञ्च जीवाश्च प्रोक्तलक्षणाः ।
षट् द्रव्याणि निगद्यन्ते द्रव्ययाथात्म्यवेदिभिः ॥ ३ ॥
विना कालेन शेषाणि द्रव्याणि जिनपुङ्गवैः ।
पञ्चास्तिकायाः कथिताः प्रदेशानां बहुत्वतः ॥ ४ ॥

समुत्पादव्ययध्रौव्यलक्षणं क्षीणकल्मषाः ।
गुणपर्ययवद्द्रव्यं वदन्ति जिनपुङ्गवाः ॥ ५ ॥
द्रव्यस्य स्यात्समुत्पादश्चेतनस्येतरस्य च ।
भावान्तरपरिप्राप्तिर्निजां जातिमनुज्झत ॥ ६ ॥
स्वजातेरविरोधेन द्रव्यस्य द्विविधस्य हि ।
विगमः पूर्वभावस्य व्यय इत्यभिधीयते ॥ ७ ॥
समुत्पादव्ययाभावो यो हि द्रव्यस्य दृश्यते ।
अनादिना स्वभावेन तद्ध्रौव्य ब्रुवते जिनाः ॥ ८ ॥
गुणो द्रव्यविधानं स्यात् पर्यायो द्रव्यविक्रिया ।
द्रव्य ह्ययुतसिद्धं स्यात्समुदायस्तयोर्द्वयोः ॥ ९ ॥
सामान्यमन्वयोत्सर्गौ शब्दा. स्युर्गुणवाचकाः ।
व्यतिरेको विशेषश्च भेदः पर्यायवाचका ॥ १० ॥
गुणैर्विना न च द्रव्यं विना द्रव्याच्च नो गुणाः ।
द्रव्यस्य च गुणानां च तस्मादव्यतिरिक्तता ॥ ११ ॥
न पर्यायाद्विना द्रव्य विना द्रव्यान्न पर्यय ।
वदन्त्यनन्यभूतत्वं द्वयोरपि महर्षयः ॥ १२ ॥
न च नाशोऽस्ति भावस्य न चाभावस्य सम्भवः ।
भावा कुर्युर्व्ययोत्पादौ पर्यायेषु गुणेषु च ॥ १३ ॥
द्रव्याण्येतानि नित्यानि तद्भावान्न व्ययन्ति यत् ।
प्रत्यभिज्ञानहेतुत्व तद्भावस्तु निगद्यते ॥ १४ ॥
इयत्तां नातिवर्तन्ते यत षडिति जातुचित् ।
अवस्थितत्वमेतेषां कथयन्ति ततो जिना. ॥ १५ ॥
शब्दरूपरसस्पर्शगन्धात्यन्तव्युदासतः ।
पञ्च द्रव्याण्यरूपाणि रूपिण पुद्गलाः पुनः ॥ १६ ॥
धर्माधर्मान्तरिक्षाणां द्रव्यमेकत्वमिष्यते ।
कालपुद्गलजीवानामनेकद्रव्यता मता ॥ १७ ॥

धर्माधर्मौ नभः कालश्चत्वारः सन्ति निःक्रियाः ।
जीवाश्च पुद्गलाश्चैव भवन्त्येतेषु सक्रियाः ॥ १८ ॥
एकस्य जीवद्रव्यस्य धर्माधर्मास्तिकाययोः ।
असङ्ख्येयप्रदेशत्वमेतेषां कथितं पृथक् ॥ १९ ॥
सङ्ख्येयाश्चाप्यसङ्ख्येया अनन्ता यदि वा पुनः ।
पुद्गलानां प्रदेशा स्युरनन्ता वियतस्तु ते ॥ २० ॥
कालस्य परिमाणस्तु द्वयोरप्येतयोः किल ।
एकप्रदेशमात्रत्वादप्रदेशत्वमिष्यते ॥ २१ ॥
लोकाकाशेऽवगाहः स्याद्द्रव्याणां न पुनर्बहिः ।
लोकालोकविभागः स्यादत एवाम्बरस्य हि ॥ २२ ॥
लोकाकाशे समस्तेऽपि धर्माधर्मास्तिकाययोः ।
तिलेषु तैलवत्प्राहुरवगाहं महर्षयः ॥ २३ ॥
संहाराच्च विसर्पाच्च प्रदेशानां प्रदीपवत् ।
जीवस्तु तदसंख्येयभागादीनवगाहते ॥ २४ ॥
लोकाकाशस्य तस्यैकप्रदेशादींस्तथा पुनः ।
पुद्गला अवगाहन्ते इति सर्वज्ञशासनम् ॥ २५ ॥
अवगाहनसामर्थ्यात्सूक्ष्मत्वपरिणामिनः ।
तिष्ठन्त्येकप्रदेशेऽपि बहवोऽपि हि पुद्गलाः ॥ २६ ॥
एकापवरकेऽनेकप्रकाशस्थितिदर्शनात् ।
न च क्षेत्रविभागः स्यान्न चैक्यमवगाहिनाम् ॥ २७ ॥
अल्पेऽधिकरणे द्रव्यं महीयो नावतिष्ठते ।
इदं न क्षमते युक्तिं दुःशिक्षितकृतं वचः ॥ २८ ॥
अल्पक्षेत्रे स्थितिर्दृष्टा प्रचयस्य विशेषतः ।
पुद्गलानां बहूनां हि करीषपटलादिषु ॥ २९ ॥
धर्मस्य गतिरत्र स्यादधर्मस्य स्थितिर्भवेत् ।
उपकारोऽवगाहस्तु नभसः परिकीर्तितः ॥ ३० ॥

पुद्गलानां शरीरं वाक् प्राणापानौ तथा मनः ।
उपकार. सुखं दुःखं जीवितं मरण तथा ॥ ३१ ॥
परस्परस्य जीवानामुपकारो निगद्यते ।
उपकारस्तु कालस्य वर्तना परिकीर्तिता ॥ ३२ ॥
क्रियापरिणतानां यः स्वयमेव क्रियावताम् ।
आदधाति सहायत्वं स धर्मः परिगीयते ॥ ३३ ॥
जीवानां पुद्गलानां च कर्तव्ये गत्युपग्रहे ।
जलवन्मत्स्यगमने धर्मः साधारणाश्रयः ॥ ३४ ॥
स्थित्या परिणतानां तु सचिवत्वं दधाति यः ।
तमधर्मं जिना. प्राहुर्निरावरणदर्शनाः ॥ ३५ ॥
जीवानां पुद्गलानां च कर्त्तव्ये स्थित्युपग्रहे ।
साधारणाश्रयो धर्मः पृथिवीव गवा स्थितौ ॥ ३६ ॥
आकाशान्तेऽत्र द्रव्याणि स्वयमाकाशतेऽथवा ।
द्रव्याणामवकाशं वा करोत्याकाशमस्त्यतः ॥ ३७ ॥
जीवानां पुद्गलानां च कालस्याधर्मधर्मयो. ।
अवगाहनहेतुत्व तदिदं प्रतिपद्यते ॥ ३८ ॥
क्रियाहेतुत्वमेतेषां नि.क्रियाणां न हीयते ।
यतः खलु बलाधानमात्रमत्र विवक्षितम् ॥ ३९ ॥
स कालो यन्निमित्ताः स्युः परिणामादिवृत्तयः ।
वर्त्तनालक्षणं तस्य कथयन्ति विपश्चितः ॥ ४० ॥
अन्तर्नीतैकसमया प्रतिद्रव्यविपर्ययम् ।
अनुभूतिः स्वसत्तायाः स्मृता सा खलु वर्तना ॥ ४१ ॥
आत्मना वर्तमानानां द्रव्याणां निजपर्ययै. ।
वर्तनाकरणात्कालो भजते हेतुकर्तृताम् ॥ ४२ ॥
न चास्य हेतुकर्तृत्व नि.क्रियस्य विरुध्यते ।
यतो निमित्तमात्रेऽपि हेतुकर्तृत्वमिष्यते ॥ ४३ ॥

एकैकवृत्त्या प्रत्येकमणवस्तस्य निःक्रियाः ।
लोकाकाशप्रदेशेषु रत्नराशिरिव स्थिताः ॥ ४४ ॥
व्यावहारिककालस्य परिणामस्तथा क्रिया ।
परत्वं चापरत्वं च लिङ्गान्याहुर्महर्षयः ॥ ४५ ॥
स्वजातेरविरोधेन विकारो यो हि वस्तुनः ।
परिणामः स निर्दिष्टोऽपरिस्पन्दात्मको जिनैः ॥ ४६ ॥
प्रयोगविस्रसाभ्यां या निमित्ताभ्यां प्रजायते ।
द्रव्यस्य सा परिज्ञेया परिस्पन्दात्मिका क्रिया ॥ ४७ ॥
परत्वं विप्रकृष्टत्वमितरत्सन्निकृष्टता ।
ते च कालकृते ग्राह्ये कालप्रकरणादिह ॥ ४८ ॥
ज्योतिर्गतिपरिच्छिन्ना मनुष्यक्षेत्रवर्त्यसौ ।
यतो न हि वहिस्तस्माज्ज्योतिषां गतिरिष्यते ॥ ४९ ॥
भूतश्च वर्तमानश्च भविष्यन्निति च त्रिधा ।
परस्परव्यपेक्षत्वाद्व्यपदेशो ह्यनेकशः ॥ ५० ॥
यथाऽनुसारतः पङ्क्तिं वहूनामिह शाखिनाम् ।
क्रमेण कस्यचित् पुंस एकैकाऽनोकुहं प्रति ॥ ५१ ॥
संप्राप्तः प्राप्नुवन्प्राप्स्यन्व्यपदेशः प्रजायते ।
द्रव्याणामपि कालाणूंस्तथाऽनुसरतामिमान् ॥ ५२ ॥
पर्यायं चानुभवतां वर्त्तनाया यथाक्रमम् ।
भूतादिव्यवहारस्य गुरुभिः सिद्धिरिष्यते ॥ ५३ ॥
भूतादिव्यपदेशोऽसौ मुख्यो गौणो ह्यनेहसि ।
व्यावहारिककालोऽपि मुख्यतामादधात्यसौ ॥ ५४ ॥
भेदादिभ्यो निमित्तेभ्यः पूरणाद्गलनादपि ।
पुद्गलानां स्वभावज्ञैः कथ्यन्ते पुद्गला इति ॥ ५५ ॥
अणुस्कन्धविभेदेन द्विविधाः खलु पुद्गलाः ।
स्कन्धो देशः प्रदेशश्च स्कन्धस्तु त्रिविधो भवेत् ॥ ५६ ॥

अनन्तपरमाणूनां संघातः स्कन्ध इष्यते ।
देशस्तस्यार्द्धमर्द्धार्द्धं प्रदेशः परिकीर्तित. ॥ ५७ ॥
भेदात्तथा च संघातात्तथा तदुभयादपि ।
उत्पद्यन्ते खलु स्कन्धा भेदादेवाणवः पुनः ॥ ५८ ॥
आत्मादिरात्ममध्यश्च तथाऽत्मान्तश्च नेन्द्रियैः ।
गृह्यते यो विभागी च परमाणुः स उच्यते ॥ ५९ ॥
सूक्ष्मो नित्यस्तथान्त्यश्च कार्यलिङ्गस्य कारणम् ।
एकगन्धरसश्चैकवर्णो द्विस्पर्शवांश्च सः ॥ ६० ॥
वर्णगन्धरसस्पर्शसंयुक्ताः परमाणवः ।
स्कन्धा अपि भवन्त्येते वर्णादिभिरनुज्झिता· ॥ ६१ ॥
शब्दसंस्थानसूक्ष्मत्वस्थौल्यबन्धसमन्विताः ।
तमश्छायातपोद्योतभेदवन्तश्च सन्ति ते ॥ ६२ ॥
साक्षरोऽनक्षरश्चैव शब्दो भाषात्मको द्विधा ।
प्रायोगिको वैस्रसिको द्विधा भाषात्मकोऽपि च ॥ ६३ ॥
संस्थानं कलशादीनामित्थ लक्षणमिष्यते ।
ज्ञेयमम्भोधरादीनामनित्थं लक्षण तथा ॥ ६४ ॥
अन्त्यमापेक्षिकञ्चेति सूक्ष्मत्वं द्विविधं भवेत् ।
परमाणुषु तत्रान्त्यमन्यद्बिल्वारुकादिषु ॥ ६५ ॥
अन्त्यापेक्षिकभेदेन ज्ञेयं स्थौल्यमपि द्विधा ।
महास्कन्धेऽन्त्यमन्यच्च बदरामलकादिषु ॥ ६६ ॥
द्विधा वैस्रसिको बन्धस्तथा प्रायोगिकोऽपि च ।
तत्र वैस्रसिको वह्निर्विद्युदम्भोधरादिषु ॥
बन्धः प्रायोगिको ज्ञेयो जतुकाष्ठादिलक्षणः ॥ ६७ ॥ षट्पदम् ।
कर्मनोकर्मबन्धो यः सोऽपि प्रायोगिको भवेत् ।
तमो दृक्प्रतिबन्धः स्यात्प्रकाशस्य विरोधि च ॥ ६८ ॥
प्राकाशावरणं यत्स्यान्निमित्तं वपुरादिकम् ।

छायेति सा परिज्ञेया द्विविधा सा च जायते ॥ ६९ ॥
तत्रैका खलु वर्णादिविकारपरिणामिनी।
स्यात्प्रतिबिम्बमात्रान्या जिनानामिति शासनम् ॥ ७० ॥
आतपोऽपि प्रकाशः स्यादुष्णश्चादित्यकारणः।
उद्योतश्चन्द्ररत्नादिप्रकाशः परिकीर्त्तितः ॥ ७१ ॥
उत्करश्चूर्णिकाचूर्णः खण्डोऽनुचटन तथा।
प्रतरश्चेति षड्भेदा भेदस्योक्ता महर्षिभिः॥ ७२ ॥
विसदृक्षाः सदृक्षा वा ये जघन्यगुणा न हि।
प्रयान्ति स्निग्धरूक्षत्वाद्बन्धन्ते परमाणवः ॥ ७३ ॥
संयुक्ता ये खलु स्वस्माद्ब्याधिकगुणैर्गुणै.।
बन्धः स्यात्परमाणूनां तैरेव परमाणुभिः ॥ ७४ ॥
बन्धेऽधिकगुणो यः स्यात्सोऽन्यस्य परिणामकः।
रेणोरधिकमाधुर्यो दृष्टः क्लिन्नगुडो यथा ॥ ७५ ॥
द्व्यणुकाद्याः किलाऽनन्ताः पुद्गलानामनेकधा।
सन्त्यचित्तमहास्कन्धपर्यन्ता बन्धपर्ययाः ॥ ७६ ॥
इतीहाजीवतत्त्वं यः श्रद्धत्ते वेत्त्युपेक्षते।
शेषतत्त्वैः समं षड्भिः स हि निर्वाणभाग्भवेत् ॥ ७७ ॥
इत्यजीवतत्त्ववर्णनम् ॥ ३ ॥

---

अनन्तकेवलज्योतिःप्रकाशितजगत्त्रयान्।
प्रणिपत्य जिनान् सर्वानास्रवः संप्रवक्ष्यते ॥ १ ॥
कायवाङ्मनसां कर्म स्मृतो योगः स आस्रवः।
शुभः पुण्यस्य विज्ञेयो विपरीतश्च पाप्मनः ॥ २ ॥
सरसः सलिलावाहिद्वारमत्र जनैर्यथा।
तदास्रवणहेतुत्वादास्रवो व्यपदिश्यते ॥ ३ ॥
आत्मनोऽपि तथैवैषा जिनैर्योगप्रणालिका।
कर्मास्रवस्य हेतुत्वादास्रवो व्यपदिश्यते ॥ ४ ॥

जन्तवः सकषाया ये कर्म ते साम्परायिकम्।
अर्जयन्त्युपशान्ताद्या ईर्यापथमथाऽपरे ॥ ५ ॥
साम्परायिकमेतत्स्यादार्द्रचर्मस्थरेणुवत्।
सकषायस्य यत्कर्मयोगानीतं तु मूर्च्छति ॥ ६ ॥
ईर्यापथं तु तच्छुष्ककुड्यप्रक्षिप्तलोष्टवत्।
अकषायस्य यत्कर्म योगानीत न मूर्च्छति ॥ ७ ॥
चतुःकषायपञ्चाक्षैस्तथा पञ्चभिरव्रतैः।
क्रियाभिः पञ्चविंशत्या साम्परायिकमाश्रयेत् ॥ ८ ॥
तीव्रमन्दपरिज्ञातभावेभ्योऽज्ञातभावतः।
वीर्याधिकरणाभ्यां च तद्विशेष विदुर्जिनाः ॥ ९ ॥
तत्राऽधिकरणं द्वेधा जीवाऽजीवविभेदत.।
त्रिःसंरम्भसमारम्भारम्भैर्योगैस्तथा त्रिभि. ॥ १० ॥
कृतादिभिस्त्रिभिश्चैव चतुर्भिश्च क्रुधादिभिः।
जीवाधिकरणस्येति भेदादष्टोत्तर शतम् ॥ ११ ॥
संयोगौ द्वौ निसर्गांस्त्रीन्निक्षेपाणां चतुष्टयम्।
निर्वर्त्तनाद्वयं चाहुर्भेदानित्यपरस्य तु ॥ १२ ॥
मात्सर्यमन्तरायश्च प्रदोषो निह्नवस्तथा।
आसादनोपघातौ च ज्ञानस्योत्सूत्रचोदितौ ॥ १३ ॥
अनादरार्थश्रवणमालस्यं शास्त्रविक्रय.।
बहुश्रुताभिमानेन तथा मिथ्योपदेशनम् ॥ १४ ॥
अकालाधीतिराचार्योपाध्यायप्रत्यनीकता।
श्रद्धाभावोऽप्यनभ्यासस्तथा तीर्थोपरोधनम् ॥ १५ ॥
बहुश्रुतावमानश्च ज्ञानाधीतेश्च शाठ्यता।
इत्येते ज्ञानरोधस्य भवन्त्यास्रवहेतवः ॥ १६ ॥
दर्शनस्यान्तरायश्च प्रदोषो निह्नवोऽपि च।
मात्सर्यमुपघातश्च तस्यैवासादनं तथा ॥ १७ ॥

नयनोत्पाटनं दीर्घस्वापिता शयनं दिवा ।
नास्तिक्यवासना सम्यग्दृष्टिसन्दूषणं तथा ॥ १८ ॥
कुतीर्थानां प्रशंसा च जुगुप्सा च तपस्विनाम् ।
दर्शनावरणस्यैते भवन्त्यास्रवहेतवः ॥ १९ ॥
दुःखं शोको वधस्तापः क्रन्दनं परिदेवनम् ।
परात्मद्वितयस्थानि तथा च परपैशुनम् ॥ २० ॥
छेदनं भेदनं चैव ताडनं दमनं तथा ।
तर्जन भर्त्सनं चैव सद्यो विश्वसनं तथा ॥ २१ ॥
पापकर्मोपजीवित्वं वक्रशीलत्वमेव च ।
शस्त्रप्रदानं विश्रम्भघातनं विषमिश्रणम् ॥ २२ ॥
शृङ्खलावागुरापाशरज्जुजालादिसर्जनम् ।
धर्मविध्वंसनं धर्मप्रत्यूहकरणं तथा ॥ २३ ॥
तपस्विगर्हणं शीलव्रतप्रच्यावनं तथा ।
इत्यसद्वेदनीयस्य भवन्त्यास्रवहेतवः ॥ २४ ॥
दया दानं तपः शीलं सत्यं शौच दमः क्षमा ।
वैयावृत्यं विनीतिश्च जिनपूजार्जवं तथा ॥ २५ ॥
सरागसंयमश्चैव संयमासंयमस्तथा ।
भूतवृत्त्यनुकम्पा च सद्वेद्यास्रवहेतवः ॥ २६ ॥
केवलीश्रुतसंघानां धर्मस्य त्रिदिवौकसाम् ।
अवर्णवादग्रहणं तथा तीर्थकृतामपि ॥ २७ ॥
मार्गसंदूषणं चैव तथैवोन्मार्गदेशनम् ।
इति दर्शनमोहस्य भवन्त्यास्रवहेतवः ॥ २८ ॥
स्यात्तीव्रपरिणामो यः कषायाणां विपाकतः ।
चारित्रमोहनीयस्य स एवास्रवकारणम् ॥ २९ ॥
उत्कृष्टमानता शैलराजीसदृशरोषता ।
मिथ्यात्वं तीव्रलोभत्वं नित्यं निरनुकम्पता ॥ ३० ॥

अजस्र जीवघातित्वं सततानृतवादिता ।
परस्वहरण नित्यं नित्य मैथुनसेवनम् ॥ ३१ ॥
कामभोगाभिलाषाणां नित्यं चातिप्रवृद्धता ।
जिनस्यासादनं साधुसमयस्य च भेदनम् ॥ ३२ ॥
मार्जारताम्रचूडादिपापीय'प्राणिपोषणम् ।
नैःशील्यं च महारम्भपरिग्रहतया सह ॥ ३३ ॥
कृष्णलेश्यापरिणत रौद्रध्यान चतुर्विधम् ।
आयुषो नारकस्येति भवन्त्यास्रवहेतवः ॥ ३४ ॥
नैःशील्यं निर्व्रतत्वं च मिथ्यात्व परवञ्चनम् ।
मिथ्यात्वसमवेतानामधर्माणां च देशनम् ॥ ३५ ॥
कृत्रिमाऽगुरुकर्पूरकुङ्कुमोत्पादन तथा ।
तथा मानतुलादीनां कूटादीनां प्रवर्तनम् ॥ ३६ ॥
सुवर्णमौक्तिकादीनां प्रतिरूपकनिर्मितिः ।
वर्णगन्धरसादीनामन्यथापादनं तथा ॥ ३७ ॥
तक्रक्षीरघृतादीनामन्यद्रव्यविमिश्रणम् ।
वाचान्यदुत्काकरणमन्यस्य क्रियया तथा ॥ ३८ ॥
कापोतनीललेश्यात्वमार्त्तध्यानं च दारुणम् ।
तैर्यग्योनायुषो ज्ञेया माया चास्रवहेतवः ॥ ३९ ॥
ऋजुत्वमीपदारम्भः परिग्रहतया सह ।
स्वभावमार्दवं चैव गुरुपूजनशीलता ॥ ४० ॥
अल्पसंक्लेशतादानं विरतिः प्राणिघाततः ।
आयुषो मानुषस्येति भवन्त्यास्रवहेतव ॥ ४१ ॥
अकामनिर्जरा बालतपो मन्दकषायता ।
सुधर्मश्रवणं दानं तथायतनसेवनम् ॥ ४२ ॥
सरागसयमश्चैव सम्यक्त्वं देशसंयम' ।
इति देवायुषो ह्येते भवन्त्यास्रवहेतवः ॥ ४३ ॥

मनोवाक्कायवक्रत्व विसंवादनशीलता ।
मिथ्यात्वं कूटसाक्षित्वं पिशुनास्थिरचित्तता ॥ ४४ ॥
विपक्रियेष्टकापाकदावाग्नीनां प्रवर्तनम् ।
प्रतिमायतनोद्यानप्रतिश्रयविनाशनम् ॥ ४५ ॥
चैत्यस्य च तथा गन्धमाल्यधूपादिमोपणम् ।
अतितीव्रकपायत्वं पापकर्मोपजीवनम् ॥ ४६ ॥
परुपासह्यवादित्वं सौभाग्यकारण तथा ।
अशुभस्येति निर्दिष्टा नाम्न आस्रवहेतव. ॥ ४७ ॥
संसारभीरुतानित्यमविसंवादनं तथा ।
योगानां चार्जवं नाम्नः शुभस्यास्रवहेतवः ॥ ४८ ॥
विशुद्धिर्दर्शनस्योचैस्तपस्त्यागौ च शक्तितः ।
मार्गप्रभावना चैव संपत्तिर्विनयस्य च ॥ ४९ ॥
शीलव्रतानतीचारो नित्यं संवेगशीलता ।
ज्ञानोपयुक्तताभीक्ष्णं समाधिश्च तपस्विनः ॥ ५० ॥
वैयावृत्त्यमनिर्हाणिः षड्विधाऽवश्यकस्य च ।
भक्तिः प्रवचनाचार्यजिनप्रवचनेषु च ॥ ५१ ॥
वात्सल्यं च प्रवचने षोडशैते यथोदिताः ।
नाम्नस्तीर्थकरत्वस्य भवन्त्यास्रवहेतवः ॥ ५२ ॥
असद्गुणानामाख्यानं सद्गुणाच्छादनं तथा ।
स्वप्रशंसान्यनिन्दा च नीचैर्गोत्रस्य हेतवः ॥ ५३ ॥
नीचैर्वृत्तिरनुत्सेकः पूर्वस्य च विपर्ययः ।
उच्चैर्गोत्रस्य सर्वज्ञैः प्रोक्ता आस्रवहेतवः ॥ ५४ ॥
तपस्विगुरुचैत्यानां पूजालोपप्रवर्तनम् ।
अनाथदीनकृपणभिक्षादिप्रतिपेधनम् ॥ ५५ ॥
वधबन्धनिरोधैश्च नासिकाच्छेदकर्तनम् ।
प्रमादाद्देवतादत्तनैवेद्यग्रहणं तथा ॥ ५६ ॥

निरवद्योपकरणपरित्यागो वधोऽङ्गिनाम् ।
दानभोगोपभोगादिप्रत्यूहकरण तथा ॥ ५७ ॥
ज्ञानस्य प्रतिषेधश्च धर्मविघ्नकृतिस्तथा ।
इत्येवमन्तरायस्य भवन्त्यास्रवहेतव॰ ॥ ५८ ॥
व्रतात्किलास्रवेत्पुण्यं पाप तु पुनरव्रतात् ।
संक्षिप्यास्रवमित्येवं चिन्त्यतेऽतो व्रताव्रतम् ॥ ५९ ॥
हिंसाया अनृताच्चैव स्तेयादब्रह्मतस्तथा ।
परिग्रहाच्च विरति॰ कथयन्ति व्रतं जिनाः ॥ ६० ॥
कार्त्स्न्येन विरति॰ पुंसां हिंसादिभ्यो महाव्रतम् ।
एकदेशेन विरतिर्विजानीयादणुव्रतम् ॥ ६१ ॥
व्रतानां स्थैर्यसिद्ध्यर्थं पञ्च पञ्च प्रतिव्रतम् ।
भावनाः संप्रतीयन्ते मुनीनां भावितात्मनाम् ॥ ६२ ॥
वचोगुप्तिर्मनोगुप्तिरीर्यासमितिरेव च ।
ग्रहनिक्षेपसमितिः पानान्नमवलोकितम् ॥ ६३ ॥
इत्येताः परिकीर्त्यन्ते प्रथमे पञ्च भावनाः ।
क्रोधलोभपरित्यागौ हास्यभीरुत्ववर्जने ॥ ६४ ॥
अनुवीचिवचश्चेति द्वितीये पञ्च भावनाः ।
शून्यागारेषु वसनं विमोचितगृहेषु च ॥ ६५ ॥
उपरोधाविधानं च भैक्ष्यशुद्धिर्यथोदिता ।
सद्धर्माऽविसंवादस्तृतीये पञ्च भावनाः ॥ ६६ ॥
स्त्रीणां रागकथाश्रावो रमणीयाङ्गवीक्षणम् ।
पूर्वरत्याः स्मृतिश्चैव वृष्येष्टरसवर्जनम् ॥ ६७ ॥
शरीरसंस्क्रियात्यागश्चतुर्थे पञ्च भावनाः ।
मनोज्ञा अमनोज्ञाश्च ये पञ्चेन्द्रियगोचराः ॥ ६८ ॥
रागद्वेषोज्झनान्येषु पञ्चमे पञ्च भावनाः ।
इह व्यपायहेतुत्वमसुत्रावद्यहेतुताम् ॥ ६९ ॥

हिंसादिषु विपक्षेषु भावयेच्च समन्ततः ।
स्वयं दुःखस्वरूपत्वाद्दुःखहेतुत्वतोऽपि च ॥ ७० ॥
हेतुत्वाद्दुःखहेतूनामिति तत्त्वपरायणाः ।
हिंसादीन्यथवा नित्यं दुःखमेवेति भावयेत् ॥ ७१ ॥
सत्त्वेषु भावयेन्मैत्रीं मुदितां गुणशालिषु ।
क्लिश्यमानेषु करुणामुपेक्षां वामदृष्टिषु ॥ ७२ ॥
संवेगसिद्धये लोकस्वभावं सुष्ठु भावयेत् ।
वैराग्यार्थं शरीरस्य स्वभावं चापि चिन्तयेत् ॥ ७३ ॥
द्रव्यभावस्वभावानां प्राणानां व्यपरोपणम् ।
प्रमत्तयोगतो यत्स्यात् सा हिंसा संप्रकीर्त्तिता ॥ ७४ ॥
प्रमत्तयोगतो यत्स्यादसदर्थाभिभाषणम् ।
समस्तमपि विज्ञेयमनृतं तत्समासतः ॥ ७५ ॥
प्रमत्तयोगतो यत्स्याददत्तार्थपरिग्रहः ।
प्रत्येय तत्खलु स्तेयं सर्वं संक्षेपयोगतः ॥ ७६ ॥
मैथुनं मदनोद्रेकादब्रह्मपरिकीर्त्तितम् ।
ममेदमिति संकल्परूपा मूर्च्छा परिग्रहः ॥ ७७ ॥
मायानिदानमिथ्यात्वशल्याभावविशेषतः ।
अहिंसादिव्रतोपेतो व्रतीति व्यपदिश्यते ॥ ७८ ॥
अनगारस्तथाऽगारी स द्विधा परिकथ्यते ।
महाव्रतोऽनगारः स्यादगारी स्यादणुव्रतः ॥ ७९ ॥
दिग्देशाऽनर्थदण्डेभ्यो विरतिः समता तथा ।
सप्रोषधोपवासश्च संख्याभोगोपभोगयोः ॥ ८० ॥
अतिथेः संविभागश्च व्रतानीमानि गेहिनः ।
अपराण्यपि सप्त स्युरित्यमी द्वादश व्रताः ॥ ८१ ॥
अपरं च व्रतं तेषामपश्चिममिहेष्यते ।
अन्ते सल्लेखनादेव्याः प्रीत्या संसेवनं च यत् ॥ ८२ ॥

सम्यक्त्वव्रतशीलेषु तथासल्लेखनाविधौ ।
अतीचाराः प्रवक्ष्यन्ते पञ्च पञ्च यथाक्रमम् ॥ ८३ ॥
शङ्कनं काङ्क्षणं चैव तथा च विचिकित्सनम् ।
प्रशसा परदृष्टीनां संस्तवश्चेति पञ्च ते ॥ ८४ ॥
बन्धो वधस्तथा छेदो गुरुभाराधिरोपणम् ।
अन्नपाननिषेधश्च प्रत्येया इति पञ्च ते ॥ ८५ ॥
कूटलेखो रहोभ्याख्या न्यासापहरणं तथा ।
मिथ्योपदेशसाकारमन्त्रभेदौ च पञ्च ते ॥ ८६ ॥
स्तेनाहृतस्य ग्रहणं तथा स्तेनप्रयोजनम् ।
व्यवहारप्रतिच्छन्दैर्मानोन्मानोनवृद्धता ॥ ८७ ॥
अतिक्रमो विरुद्धे च राज्ये सन्तीति पञ्च ते ।
अनङ्गक्रीडितं तीव्रोऽभिनिवेशो मनोभुवः ॥ ८८ ॥
इत्वर्योर्गमनं चैव संगृहीतागृहीतयो. ।
तथा परविवाहस्य करणं चेति पञ्च ते ॥ ८९ ॥
हिरण्यस्वर्णयोः क्षेत्रवास्तुनोर्धनधान्ययोः ।
दासीदासस्य कुप्यस्य मानाधिक्यानि पञ्च ते ॥ ९० ॥
तिर्यग्व्यतिक्रमस्तद्वदध ऊर्ध्वमतिक्रमौ ।
तथा स्मृत्यन्तराधानं क्षेत्रवृद्धिश्च पञ्च ते ॥ ९१ ॥
असिन्नानयनं देशे शब्दरूपानुपातनम् ।
प्रेष्यप्रयोजनं क्षेपः पुद्गलानां च पञ्च ते ॥ ९२ ॥
असमीक्ष्याधिकरणं भोगानर्थक्यमेव च ।
तथा कन्दर्पकौत्कुच्यमौखर्याणि च पञ्च ते ॥ ९३ ॥
त्रीणि दुःप्रणिधानानि वाङ्मनःकायकर्मणाम् ।
अनादरोऽनुपस्थानं स्मरणस्येति पञ्च ते ॥ ९४ ॥
संस्तरोत्सर्जनादानमसंदृष्टापमार्जितम् ।
अनादरोऽनुपस्थानं स्मरणस्येति पञ्च ते ॥ ९५ ॥

सचित्तस्तेनसम्बन्धस्तेनसंमिश्रितस्तथा ।
दुःपक्वोऽभिषवश्चैवमाहाराः पञ्च पञ्च ते ॥ ९६ ॥
कालव्यतिक्रमोऽन्यस्य व्यपदेशोऽथ मत्सरः ।
सचित्ते स्थापनं तेन पिधानं चेति पञ्च ते ॥ ९७ ॥
पञ्चत्वजीविताशंसे तथा मित्रानुरञ्जनम् ।
सुखानुबन्धनं चैव निदानं चेति पञ्च ते॥ ९८ ॥
परात्मनोरनुग्राही धर्मवृद्धिकरत्वतः ।
स्वस्योत्सर्जनमिच्छन्ति दानं नाम गृहिव्रतम् ॥ ९९ ॥
विधिद्रव्यविशेषाभ्यां दातृपात्रविशेषतः ।
ज्ञेयो दानविशेषस्तु पुण्यास्रवविशेषकृत् ॥ १०० ॥
हिंसानृतचुराब्रह्मसंगसंन्यासलक्षणम् ।
व्रतं पुण्यास्रवोत्थानं भावेनेति प्रपञ्चितम् ॥ १०१ ॥
हिंसानृतचुराब्रह्मसंगसंन्यासलक्षणम् ।
चिन्त्यं पापास्रवोत्थानं भावेन स्वयमव्रतम् ॥ १०२ ॥
हेतुकार्यविशेषाभ्यां विशेषः पुण्यपापयोः ।
हेतू शुभाशुभौ भावौ कार्ये चैव सुखासुखे ॥ १०३ ॥
संसारकारणत्वस्य द्वयोरप्यविशेषतः ।
न नाम निश्चये नास्ति विशेषः पुण्यपापयोः ॥१०४ ॥
इतीहास्रवतत्त्वं यः श्रद्धत्ते वेत्त्युपेक्षते ।
शेषतत्त्वैः समं षड्भिः स हि निर्वाणभाग्भवेत् ॥ १०५ ॥

इत्यास्रवतत्त्ववर्णनम् ॥ ४ ॥

---

अनन्तकेवलज्योतिःप्रकाशितजगत्त्रयान् ।
प्रणिपत्य जिनान्मूर्ध्ना बन्धतत्त्वं प्ररूप्यते ॥ १ ॥
बन्धस्य हेतवः पञ्च स्युर्मिथ्यात्वमसंयमः ।
प्रमादश्च कषायश्च योगश्चेति जिनोदिताः ॥ २ ॥
ऐकान्तिकं सांशयिकं विपरीतं तथैव च ।

आज्ञानिक च मिथ्यात्वं तथा वैनयिकं भवेत् ॥ ३ ॥
यत्राभिसन्निवेश' स्यादत्यन्तं धर्मिधर्मयोः ।
इदमेवेत्थमेवेति तदैकान्तिकमुच्यते ॥ ४ ॥
किं वा भवेन्न वा जैनो धर्मोऽहिंसादिलक्षणः ।
इति यत्र मतिद्वैधं भवेत्साशयिकं हि तत् ॥ ५ ॥
सग्रन्थोऽपि च निर्ग्रन्थो ग्रासाहारी च केवली ।
रुचिरेवविधा यत्र विपरीतं हि तत्स्मृतम् ॥ ६ ॥
हिताहितविवेकस्य यत्रात्यन्तमदर्शनम् ।
यथा पशुवधो धर्मस्तदज्ञानिकमुच्यते ॥ ७ ॥
सर्वेपामपि देवानां समयाना तथैव च ।
यत्र स्यात्समदर्शित्वं ज्ञेय वैनयिकं हि तत् ॥ ८ ॥
षड्जीवकायपञ्चाक्षमनोविपयभेदत ।
कथितो द्वादशविधः सर्वविद्भिरसंयमः ॥ ९ ॥
शुद्ध्यष्टके तथा धर्मे क्षान्त्यादिदशलक्षणे ।
योऽनुत्साहः स सर्वज्ञे. प्रमादः परिकीर्त्तितः ॥ १० ॥
पोडशैव कपायाः स्युर्नोकपाया नवेरिता ।
ईपद्भेदो न भेदोऽत्र कपाया पञ्चविंशति. ॥ ११ ॥
चत्वारो हि मनोयोगा वाग्योगाना चतुष्टयम् ।
पञ्च द्वौ च वपुर्योगा योगाः पञ्चदशोदिताः ॥ १२ ॥
यज्जीवः सकपायत्वात्कर्मणो योग्यपुद्गलान् ।
आदत्ते सर्वतो योगात्स बन्ध' कथितो जिनैः ॥ १३ ॥
न कर्मात्मगुणोऽमूर्तेस्तस्य बन्धाप्रसिद्धितः ।
अनुग्रहोपघातौ हि नामूर्त्ते. कर्त्तुमर्हति ॥ १४ ॥
औदारिकादिकार्याणां कारणं कर्म मूर्त्तिमत् ।
न ह्यमूर्त्तेन मूर्त्तानामारम्भः क्वापि दृश्यते ॥ १५ ॥
न च बन्धाप्रसिद्धिः स्यान्मूर्त्तैः कर्मभिरात्मनः ।

अमूर्त्तेरित्यनेकान्तात्तस्य मूर्त्तित्वसिद्धितः ॥ १६ ॥
अनादिनित्यसम्बन्धात्सह कर्मभिरात्मनः ।
अमूर्तस्यापि सत्यैक्ये मूर्तत्वमवसीयते ॥ १७ ॥
बन्धं प्रति भवत्यैकमन्योन्यानुप्रवेशतः ।
युगपद्द्रावितः स्वर्णरौप्यवज्जीवकर्मणोः ॥ १८ ॥
तथा च मूर्त्तिमानात्मा सुराभिभवदर्शनात् ।
नह्यमूर्त्तस्य नभसो मदिरा मदकारिणी ॥ १९ ॥
गुणस्य गुणिनश्चैव न च बन्धः प्रसज्यते ।
निर्मुक्तस्य गुणत्यागे वस्तुत्वानुपपत्तितः ॥ २० ॥
प्रकृतिस्थितिबन्धौ द्वौ बन्धश्चानुभवाभिधः ।
तथा प्रदेशबन्धश्च ज्ञेयो बन्धश्चतुर्विधः ॥ २१ ॥
ज्ञानदर्शनयो रोधौ वेद्यं मोहायुषी तथा ।
नामगोत्रान्तरायौ च मूलप्रकृतयः स्मृताः ॥ २२ ॥
अन्याः पञ्च नव द्वे च तथाष्टाविंशतिः क्रमात् ।
चतस्रश्च त्रिसंयुक्ता नवतिर्द्वे च पञ्च च ॥ २३ ॥
मतिः श्रुतावधी चैव मनःपर्ययकेवले ।
एषामावृत्तयो ज्ञानरोधप्रकृतयः स्मृताः ॥ २४ ॥
चतुर्णां चक्षुरादीनां दर्शनानां निरोधतः ।
दर्शनावरणाभिख्यं प्रकृतीनां चतुष्टयम् ॥ २५ ॥
निद्रानिद्रा तथा निद्रा प्रचलाप्रचला तथा ।
प्रचला स्त्यानगृद्धिश्च दृग्रोधस्य नव स्मृताः ॥ २६ ॥
द्विधा वेद्यमसद्वेद्यं सद्वेद्यं च प्रकीर्तितम् ।
त्रयः सम्यक्त्वमिथ्यात्वसम्यग्मिथ्यात्वभेदतः ॥२७॥
क्रोधो मानस्तथा माया लोभोऽनन्तानुबन्धिनः ।
तथा त एव चाप्रत्याख्यानावरणसंज्ञिकाः ॥ २८ ॥
प्रत्याख्यानरुधश्चैव तथा सञ्ज्वलनाभिधाः ।

हास्यं रत्यरती शोको भय सह जुगुप्सया ॥ २९ ॥
नारीपुंपण्ढवेदाश्च मोहप्रकृतयः स्मृताः ।
श्वाभ्रतिर्यग्नृदेवायुर्भेदादायुश्चतुर्विधम् ॥ ३० ॥
चतस्रो गतयः पञ्च जातयः कायपञ्चकम् ।
अङ्गोपाङ्गत्रयं चैव निर्माणप्रकृतिस्तथा ॥ ३१ ॥
पञ्चधा बन्धनं चैव सङ्घातोऽपि च पञ्चधा ।
समादिचतुरस्रं तु न्यग्रोधं सातिकुब्जकम् ॥ ३२ ॥
वामनं हुण्डसंज्ञं च संस्थानमपि षड्विधम् ।
स्याद्वज्रर्षभनाराचं वज्रनाराचमेव च ॥ ३३ ॥
नाराचमर्द्धनाराचं कीलकं च ततः परम् ।
तथा संहननं षष्ठमसंप्राप्तासृपाटिका ॥ ३४ ॥
अष्टधा स्पर्शनामापि कर्कशं मृदु लघ्वपि ।
गुरु स्निग्ध तथा रूक्षं शीतमुष्ण तथैव च ॥ ३५ ॥
मधुरोऽम्लः कटुस्तिक्तः कषायः पञ्चधा रसः ।
वर्णाः शुक्लादयः पञ्च द्वौ गन्धौ सुरभीतरौ ॥ ३६ ॥
श्वभ्रादिगतिभेदात्स्यादानुपूर्वीचतुष्टयम् ।
उपघातः परघातस्तथा गुरुलघुर्भवेत् ॥ ३७ ॥
उच्छ्वास आतपोद्योतौ शस्ताशस्ते नभोगती ।
प्रत्येकत्रसपर्याप्तबादराणि शुभं स्थिरम् ॥ ३८ ॥
सुस्वरं सुभगादेय यशः कीर्तिः सहेतरैः ।
तथा तीर्थकरत्वं च नामप्रकृतय. स्मृताः ॥ ३९ ॥
गोत्रकर्म द्विधा ज्ञेयमुच्चनीचविभेदतः ।
स्याद्दानलाभवीर्याणां परिभोगोपभोगयोः ॥ ४० ॥
अन्तरायस्य वैचित्र्यादन्तरायोऽपि पञ्चधा ।
द्वे त्यक्त्वा मोहनीयस्य नाम्न. षड्विंशतिस्तथा ॥ ४१ ॥
सर्वेषा कर्मणां शेषा बन्धप्रकृतय. स्मृताः ।

अबन्धा मिश्रसम्यक्त्वे बन्धसङ्घातयोर्दश ॥ ४२ ॥
स्पर्शे सप्त तथैका च गन्धेष्टौ रसवर्णयोः ।
वेद्यान्तराययोर्ज्ञानदृगावरणयोस्तथा ॥ ४३ ॥
कोटीकोट्यः स्मृतास्त्रिंशत्सागराणां परा स्थितिः ।
मोहस्य सप्ततिस्ताः स्युर्विंशतिर्नामगोत्रयोः ॥ ४४ ॥
आयुषस्तु त्रयस्त्रिंशत्सागराणां परा स्थितिः ।
मुहूर्ता द्वादश ज्ञेया वेद्येष्टौ नामगोत्रयोः ॥ ४५ ॥
स्थितिरन्तर्मुहूर्तस्तु जघन्या शेषकर्मसु ।
विपाकः प्रागुपात्तानां य. शुभाशुभकर्मणाम् ॥ ४६ ॥
असावनुभवो ज्ञेयो यथा नाम भवेच्च सः ।
घनाङ्गुलस्यासङ्ख्येयभागक्षेत्रावगाहिनः ॥ ४७ ॥
एकद्वित्र्याद्यसङ्ख्येयसमयास्थितिकांस्तथा ।
उष्णरुक्षहिमस्निग्धान्सर्ववर्णरसान्वितान् ॥ ४८ ॥
सर्वकर्मप्रकृत्यर्हान् सर्वेष्वपि भवेषु यत् ।
द्विविधान् पुद्गलस्कन्धान् सूक्ष्मान् योगविशेषतः ॥ ४९ ॥
सर्वेष्वात्मप्रदेशेष्वनन्तानन्तप्रदेशकान् ।
आत्मसात्कुरुते जीवः सः प्रदेशोऽभिधीयते ॥ ५० ॥
शुभाशुभोपयोगाख्यनिमित्तो द्विविधस्तथा ।
पुण्यपापतया द्वेधा सर्वं कर्म प्रभिद्यते ॥ ५१ ॥
उच्चैर्गोत्रं शुभायूंषि सद्वेद्यं शुभनाम च ।
द्विचत्वारिंशदित्येवं पुण्यप्रकृतयः स्मृताः ॥ ५२ ॥
नीचैर्गोत्रमसद्वेद्यं श्वभ्रायुर्नाम चाशुभम् ।
द्व्यशीतिर्घातिभिः सार्द्धं पापप्रकृतयः स्मृताः ॥ ५३ ॥
इत्येतद्बन्धतत्त्वं यः श्रद्धत्ते वेत्त्युपेक्षते ।
शेषतत्त्वैः समं षड्भिः स हि निर्वाणभाग्भवेत् ॥ ५४ ॥

इति बन्धतत्त्ववर्णनम् ॥ ५ ॥

अनन्तकेवलज्योतिःप्रकाशितजगत्त्रयान् ।
प्रणिपत्य जिनान् मूर्ध्ना संवरः संप्रचक्ष्यते ॥ १ ॥
यथोक्तानां हि हेतूनामात्मनः सति संभवे ।
आस्रवस्य निरोधो य. स जिनैः सवरः स्मृतः ॥ २ ॥
गुप्तिः समितयो धर्मः परीषहजयस्तपः ।
अनुप्रेक्षाश्च चारित्रं सन्ति संवरहेतवः ॥ ३ ॥
योगानां निग्रहः सम्यग्गुप्तिरित्यभिधीयते ।
मनोगुप्तिर्वचोगुप्तिः कायगुप्तिश्च सा त्रिधा ॥ ४ ॥
तत्र प्रवर्तमानस्य योगानां निग्रहे सति ।
तन्निमित्तास्रवाभावात्सद्यो भवति संवरः ॥ ५ ॥
ईर्याभाषैषणादाननिक्षेपोत्सर्गभेदतः ।
पञ्चगुप्तावशक्तस्य साधोः समितयः स्मृता. ॥ ६ ॥
मार्गोद्योतोपयोगानामालम्ब्यस्य च शुद्धिभिः ।
गच्छतः सूत्रमार्गेण स्मृतेर्या समितिर्यते. ॥ ७ ॥
व्यलीकादिविनिर्मुक्तं सत्यासत्यामृषाद्वयम् ।
वदतः सूत्रमार्गेण भाषासमितिरिष्यते ॥ ८ ॥
पिण्ड तथोपधिं शय्यामुद्गमोत्पादनादिना ।
साधोः शोधयतः शुद्धा ह्येषणा समितिर्भवेत् ॥ ९ ॥
सहसादृष्टदुर्मृष्टाप्रत्यवेक्षणदूषणम् ।
त्यजत· समितिर्ज्ञेयादाननिक्षेपगोचरा ॥ १० ॥
समितिर्दर्शितानेन प्रतिष्ठापनगोचरा ।
त्याज्य मूत्रादिकं द्रव्य स्थण्डिले त्यजतो यतेः ॥ ११ ॥
इत्थं प्रवर्तमानस्य न कर्माण्यास्रवन्ति हि ।
असंयमनिमित्तानि ततो भवति संवर ॥ १२ ॥
क्षमामृद्वृजुते शौचं स सत्यं सयमस्तपः ।
त्यागोऽकिञ्चनता ब्रह्म धर्मो दशविधः स्मृतः ॥ १३ ॥

क्रोधोत्पत्तिनिमित्तानामत्यन्तं सति सम्भवे ।
आक्रोशताडनादीनां कालुष्योपरमः क्षमा ॥ १४ ॥
अभावो योऽभिमानस्य परैः परिभवे कृते ।
जात्यादीनामनावेशान् मदानां मार्दवं हि तत् ॥ १५ ॥
वाङ्मनःकाययोगानामवक्रत्वं तदार्जवम् ।
परिभोगोपभोगत्वं जीवितेन्द्रियभेदतः ॥ १६ ॥
चतुर्विधस्य लोभस्य निवृत्तिः शौचमुच्यते ।
ज्ञानचारित्रशिक्षादौ स धर्मः सुनिगद्यते ।
धर्मोपबृंहणार्थं यत्साधु सत्यं तदुच्यते ॥ १७ ॥ ( षट्पदम् )
इन्द्रियार्थेषु वैराग्यं प्राणिनां वधवर्जनम् ।
समितौ वर्तमानस्य मुनेर्भवति संयमः ॥ १८ ॥
परं कर्मक्षयार्थं यत्तप्यते तत्तपः स्मृतम् ।
त्यागस्तु धर्मशास्त्रादिविश्राणनमुदाहृतम् ॥ १९ ॥
ममेदमित्युपात्तेषु शरीरादिषु केषुचित् ।
अभिसन्धिनिवृत्तिर्या तदाकिञ्चन्यमुच्यते ॥ २० ॥
स्त्रीसंसक्तस्य शय्यादेरनुभूताङ्गनास्मृतेः ।
तत्कथायाः श्रुतेश्च स्याद्ब्रह्मचर्यं हि वर्जनात् ॥ २१ ॥
इति प्रवर्तमानस्य धर्मे भवति संवरः ।
तद्विपक्षनिमित्तस्य कर्मणो नास्रवे सति ॥ २२ ॥
क्षुत्पिपासा च शीतोष्णदंशमत्कुणनग्नते ।
अरतिः स्त्री च चर्या च निषद्या शयनं तथा ॥ २३ ॥
आक्रोशश्च वधश्चैव याचनालाभयोर्द्वयम् ।
रोगश्च तृणसंस्पर्शस्तथा च मलधारणम् ॥ २४ ॥
असत्कारपुरस्कारं प्रज्ञाज्ञानमदर्शनम् ।
इति द्वाविंशतिः सम्यक् सोढव्याः स्युः परीषहाः ॥ २५ ॥
संवरो हि भवत्येतानसंक्लिष्टेन चेतसा ।

सहमानस्य रागादिनिमित्तास्रवरोधतः ॥ २६ ॥
तपो हि निर्जराहेतुरुत्तरत्र प्रचक्ष्यते ।
संवरस्यापि विद्वांसो विदुस्तन्मुख्यकारणम् ॥ २७ ॥
अनेककार्यकारित्वं न चैकस्य विरुध्यते।
दाहपाकादिहेतुत्वं दृश्यते हि विभावसो ॥ २८ ॥
अनित्यं शरणाभावो भवश्चैकत्वमन्यता ।
अशौचमास्रवश्चैव संवरो निर्जरा तथा ॥ २९ ॥
लोको दुर्लभता बोधिः स्वाख्यातत्वं वृषस्य च ।
अनुचिन्तनमेतेषामनुप्रेक्षाः प्रकीर्तिताः ॥ ३० ॥
क्रोडीकरोति प्रथमं जातजन्तुमनित्यता ।
धात्री च जननी पश्चाद्धिग्मानुष्यमसारकम् ॥ ३१ ॥
उपघ्रातस्य घोरेण मृत्युव्याघ्रेण देहिनः ।
देवा अपि न जायन्ते शरणं किमु मानवाः ॥ ३२ ॥
चतुर्गतिघटीयन्त्रे सन्निवेश्य घटीमिव ।
आत्मानं भ्रमयत्येष हा कष्ट कर्मकच्छिकः ॥ ३३ ॥
कस्याऽपत्य पिता कस्य कस्याम्बा कस्य गेहिनी ।
एक एव भवाम्भोधौ जीवो भ्रमति दुस्तरे ॥ ३४ ॥
अन्यः सचेतनो जीवो वपुरन्यदचेतनम् ।
हा तथापि न मन्यन्ते नानात्वमनयोर्जनाः ॥ ३५ ॥
नानाकृमिशताकीर्णे दुर्गन्धे मलपूरिते ।
आत्मनश्च परेषां च क्व शुचित्व शरीरके ॥ ३६ ॥
कर्माम्भोभिः प्रपूर्णोऽसौ योगरन्ध्रसमाहृतैः ।
हा दुरन्ते भवाम्भोधौ जीवो मज्जति पोतवत् ॥ ३७ ॥
योगद्वाराणि रुन्धन्तः कपाटैरिव गुप्तिभिः ।
आपतद्भिर्न बाध्यन्ते धन्याः कर्मभिरुत्कटैः ॥ ३८ ॥
गाढोपजीर्यते यद्वदामदोषो विसर्पणात् ।

तद्वन्निर्जीर्यते कर्म तपसा पूर्वसञ्चितम् ॥ ३९ ॥
नित्याध्वगेन जीवेन भ्रमता लोकवर्त्मनि ।
वसति स्थानवत्कानि कुलान्यध्युषितानि न ॥ ४० ॥
मोक्षारोहणनिश्रेणिः कल्याणानां परम्परा ।
अहो कष्टं भवाम्भोधौ बोधिर्जीवस्य दुर्लभा ॥ ४१ ॥
क्षान्त्यादिलक्षणो धर्मः स्वाख्यातो जिनपुङ्गवैः ।
अयमालम्बनस्तम्भो भवाम्भोधौ निमज्जताम् ॥ ४२ ॥
एवं भावयतः साधोर्भवेद्धर्ममहोद्यमः ।
ततो हि निःप्रमादस्य महान् भवति संवरः ॥ ४३ ॥
वृत्तं सामायिकं ज्ञेयं छेदोपस्थापनं तथा ।
परिहारं च सूक्ष्मं च यथाख्यातं च पञ्चमम् ॥ ४४ ॥
प्रत्याख्यानप्रभेदेन सर्वसावद्यकर्मणः ।
नित्यं नियतकालं वा वृत्तं सामायिकं स्मृतम् ॥ ४५ ॥
यत्र हिंसादिभेदेन त्यागः सावद्यकर्मणः ।
व्रतलोपे विशुद्धिर्वा छेदोपस्थापन हि तत् ॥ ४६ ॥
विशिष्टपरिहारेण प्राणिघातस्य यत्र हि ।
शुद्धिर्भवति चारित्रं परिहारविशुद्धि तत् ॥ ४७ ॥
कषायेषु प्रशान्तेषु प्रक्षीणेष्वखिलेषु वा ।
स्यात्सूक्ष्मसाम्परायाख्यं सूक्ष्मलोभवतो यतेः ॥ ४८ ॥
क्षयाच्चारित्रमोहस्य कार्त्स्न्येनोपशमात्तथा ।
यथाख्यातमथाख्यातं चारित्रं पञ्चमं जिनैः ॥ ४९ ॥
सम्यक्चारित्रमित्येतद्यथास्वं चरतो यतेः ।
सर्वास्रवनिरोधः स्यात्ततो भवति संवरः ॥ ५० ॥
तपस्तु वक्ष्यते तद्धि सम्यग्भावयतो यतेः ।
स्नेहक्षयात्तथा योगरोधाद्भवति संवरः ॥ ५१ ॥
इति संवरतत्त्वं यः श्रद्धत्ते वेत्त्युपेक्षते ।

शेषतत्त्वैः समं षड्भिः स हि निर्वाणभाग्भवेत् ॥ ५२ ॥

इति संवरतत्त्ववर्णनम् ॥ ६ ॥

अनन्तकेवलज्योतिःप्रकाशितजगत्त्रयान् ।
प्रणिपत्य जिनान् मूर्ध्ना निर्जरातत्त्वमुच्यते ॥ १ ॥
उपात्तकर्मणः पातो निर्जरा द्विविधा च सा ।
आद्या विपाकजा तत्र द्वितीया चाविपाकजा ॥ २ ॥
अनादिबन्धनोपाधिविपाकवशवर्त्तिनः ।
कर्मारब्धफलं यत्र क्षीयते सा विपाकजा ॥ ३ ॥
अनुदीर्णं तपः शक्त्या यत्रोदीर्णोदयावलीम् ।
प्रवेश्य वेद्यते कर्म सा भवत्यविपाकजा ॥ ४ ॥
यथाम्रपनसादीनि परिपाकमुपायतः ।
अकालेऽपि प्रपद्यन्ते तथा कर्माणि देहिनाम् ॥ ५ ॥
अनुभूय क्रमात्कर्मविपाकप्राप्तमुज्झताम् ।
प्रथमास्त्येव सर्वेषां द्वितीया तु तपस्विनाम् ॥ ६ ॥
तपस्तु द्विविधं प्रोक्तं बाह्याभ्यन्तरभेदतः ।
प्रत्येकं षड्विधं तच्च सर्वं द्वादशधा भवेत् ॥ ७ ॥
बाह्यं तत्रावमोदर्यमुपवासो रसोज्झनम् ।
वृत्तिसङ्ख्या वपुःक्लेशो विविक्तशयनासनम् ॥ ८ ॥
सर्वं तदवमोदर्यमाहारं यत्र ह्रापयेत् ।
एकद्वित्र्यादिभिर्ग्रासैराग्रासं समयान्मुनिः ॥ ९ ॥
मोक्षार्थं त्यज्यते यस्मिन्नाहारोऽपि चतुर्विधः ।
उपवासः स तद्भेदाः सन्ति षष्ठाष्टमादयः ॥ १० ॥
रसत्यागो भवेत्तैलक्षीरेक्षुदधिसर्पिषाम् ।
एकद्वित्रीणि चत्वारि त्यजतस्तानि पञ्चधा ॥ ११ ॥
एकवस्तुदशागारपानमुद्गादिगोचरः ।
सङ्कल्पः क्रियते यत्र वृत्तिसङ्ख्या हि तत्तपः ॥ १२ ॥

अनेकप्रतिमास्थानं मौनं शीतसहिष्णुता ।
आतपस्थानमित्यादिकायक्लेशो मतं तपः ॥ १३ ॥
जन्तुपीडाविमुक्तायां वसतौ शयनासनम् ।
सेवमानस्य विज्ञेयं विविक्तशयनासनम् ॥ १४ ॥
स्वाध्यायः शोधनं चैव वैयावृत्यं तथैव च ।
व्युत्सर्गो विनयश्चैव ध्यानमाभ्यन्तरं तपः ॥ १५ ॥
वाचनापृच्छनाम्नायस्तथा धर्मस्य देशना ।
अनुप्रेक्षा च निर्दिष्टः स्वाध्यायः पञ्चधा जिनैः ॥ १६ ॥
वाचना सा परिज्ञेया यत्पात्रे प्रतिपादनम् ।
ग्रन्थस्य वाथ पद्यस्य तत्त्वार्थस्योभयस्य वा ॥ १७ ॥
तत्संशयापनोदाय तन्निश्चयबलाय वा ।
परं प्रत्यनुयोगाय प्रच्छनां तद्विदुर्जिनाः ॥ १८ ॥
आम्नायः कथ्यते घोषो विशुद्धं परिवर्तनम् ।
कथाधर्माद्यनुष्ठानं विज्ञेया धर्मदेशना ॥ १९ ॥
साधोरधिगतार्थस्य योऽभ्यासो मनसा भवेत् ।
अनुप्रेक्षेति निर्दिष्टः स्वाध्यायः स जिनेशिभिः ॥ २० ॥
आलोचनं प्रतिक्रान्तिस्तथा तदुभयं तपः ।
व्युत्सर्गश्च विवेकश्च तथोपस्थापना मता ॥ २१ ॥
परिहारस्तथाच्छेदः प्रायश्चित्तभिदा नव ।
आलोचनं प्रमादस्य गुरवे विनिवेदनम् ॥ २२ ॥
अभिव्यक्तप्रतीकारं मिथ्या मे दुष्कृतादिभिः ।
प्रतिक्रान्तिस्तदुभयं संसर्गे सति शोधनात् ॥ २३ ॥
भवेत्तपोऽवमोदर्यं वृत्तिसङ्ख्यादिलक्षणम् ।
कायोत्सर्गादिकरणं व्युत्सर्गः परिभाषितः ॥ २४ ॥
अन्नपानौपधीनां तु विवेकः स्याद्विवेचनम् ।
पुनर्दीक्षाप्रदानं यत्सा ह्युपस्थापना भवेत् ॥ २५ ॥

परिहारस्तु मासादिविभागेन विवर्जनम् ।
प्रव्रज्याहापनं छेदो मासपक्षदिनादिना ॥ २६ ॥
सूर्य्युपाध्यायसाधूनां शैक्ष्यग्लानतपस्विनाम् ।
कुलसङ्घमनोज्ञाना वैयावृत्य गणस्य च ॥ २७ ॥
व्याध्याद्युपनिपातेऽपि तेषां सम्यग् विधीयते ।
स्वशक्त्या यत्प्रतीकारो वैयावृत्यं तदुच्यते ॥ २८ ॥
बाह्यान्तरोपधित्यागाद् व्युत्सर्गो द्विविधो भवेत् ।
क्षेत्रादिरुपधिर्बाह्य. क्रोधादिरपरः पुनः ॥ २९ ॥
दर्शनज्ञानविनयौ चारित्रविनयोऽपि च ॥
तथोपचारविनयो विनय. स्याच्चतुर्विधः ॥ ३० ॥
यत्र निःशङ्कितत्वादिलक्षणोपेतता भवेत् ।
श्रद्धाने सप्ततत्त्वानां सम्यक्त्वविनयः स हि ॥ ३१ ॥
ज्ञानस्य ग्रहणाभ्यासस्मरणादीनि कुर्वतः ।
बहुमानादिभि. सार्द्धं ज्ञानस्य विनयो भवेत् ॥ ३२ ॥
दर्शनज्ञानयुक्तस्य या समीहितचित्तता ।
चारित्र प्रति जायेत चारित्रविनयो हि सः ॥ ३३ ॥
अभ्युत्थानानुगमन वन्दनादीनि कुर्वत. ।
आचार्यादिषु पूज्येषु विनयो ह्यौपचारिक ॥ ३४ ॥
आर्त रौद्रं च धर्म्यं च शुक्लं चेति चतुर्विधम् ।
ध्यानमुक्तं परं तत्र तपोऽङ्गमुभयं भवेत् ॥ ३५ ॥
प्रियभ्रंशेऽप्रियप्राप्तौ निदाने वेदनोदये ।
आर्त्तं कषायसंयुक्त ध्यानमुक्तं समासतः ॥ ३६ ॥
हिंसायामनृते स्तेये तथा विषयरक्षणे ।
रौद्र कषायसंयुक्तं ध्यानमुक्तं समासत. ॥ ३७ ॥
एकाग्रत्वेऽतिचिन्ताया निरोधो ध्यानमिष्यते ।
अन्तर्मुहूर्त्ततस्तच्च भवत्युत्तमसंहतेः ॥ ३८ ॥

आज्ञापायं विपाकानां विवेकाय च संस्थितेः।
मनसः प्रणिधानं यद्धर्मध्यानं तदुच्यते ॥ ३९ ॥
प्रमाणीकृत्य सार्वज्ञीमाज्ञामर्थावधारणम्।
गहनानां पदार्थानामाज्ञाविचयमुच्यते ॥ ४० ॥
कथं मार्गं प्रपद्येरन्नमी उन्मार्गतो जनाः।
अपायमिति या चिन्ता तदपायविचारणम् ॥ ४१ ॥
द्रव्यादिप्रत्ययं कर्म फलानुभवनं प्रति।
भवति प्रणिधानं यद्विपाकविचयस्तु सः॥ ४२ ॥
लोकसंस्थानपर्यायस्वभावस्य विचारणम्।
लोकानुयोगमार्गेण संस्थानविचयो भवेत् ॥ ४३ ॥
शुक्लं पृथक्त्वमाद्यं स्यादेकत्वं तु द्वितीयकम्।
सूक्ष्मक्रियं तृतीयं तु तुर्यं व्युपरतक्रियम् ॥ ४४ ॥
द्रव्याण्यनेकभेदानि योगैर्ध्यायति यत्त्रिभिः।
शान्तमोहस्ततो ह्येतत्पृथक्त्वमिति कीर्तितम् ॥ ४५ ॥
श्रुतं यतो वितर्कः स्याद्यतः पूर्वार्थशिक्षितः।
पृथक्त्वं ध्यायति ध्यानं सवितर्कं ततो हि तत् ॥ ४६ ॥
अर्थव्यञ्जनयोगानां वीचारः सङ्क्रमो मतः।
वीचारस्य हि सद्भावात् सवीचारमिदं भवेत् ॥ ४७ ॥
द्रव्यमेकं तथैकेन योगेनान्यतरेण च।
ध्यायति क्षीणमोहो यत्तदेकत्वमिदं भवेत् ॥ ४८ ॥
श्रुतं यतो वितर्कः स्याद्यतः पूर्वार्थशिक्षित.।
एकत्वं ध्यायति ध्यानं सवितर्कं ततो हि तत् ॥ ४९ ॥
अर्थव्यञ्जनयोगानां विचारः सङ्क्रमो मतः।
वीचारस्य ह्यसद्भावादवीचारमिदं भवेत् ॥ ५० ॥
अवितर्कमवीचारं सूक्ष्मकायावलम्बनम्।
सूक्ष्मक्रियं भवेद्ध्यानं सर्वभावगतं हि तत् ॥ ५१ ॥

काययोगेऽतिसूक्ष्मे तद्वर्त्तमानो हि केवली ।
शुक्लं ध्यायति सरोद्धुं काययोग तथाविधम् ॥ ५२ ॥
अवितर्कमवीचारं ध्यानं व्युपरतक्रियम् ।
परं निरुद्धयोगं हि तच्छैलेस्यमपश्चिमम् ॥ ५३ ॥
तत्पुना रुद्धयोगः सन् कुर्वन् कायत्रयासनम् ।
सर्वज्ञः परमं शुक्ल ध्यायत्यप्रतिपत्ति तत् ॥ ५४ ॥
सम्यग्दर्शनसम्पन्न. संयतासयतस्ततः ।
संयतस्तु ततोऽनन्तानुबन्धिप्रवियोजकः ॥ ५५ ॥
दृग्मोहक्षपकस्तस्मात्तथोपशमकस्ततः ।
उपशान्तकपायोऽतस्ततस्तु क्षपको मतः ॥ ५६ ॥
ततः क्षीणकपायस्तु घातिमुक्तस्ततो जिनः ।
दशैते क्रमतः सन्त्यसङ्ख्येयगुणनिर्जराः ॥ ५७ ॥
पुलाको वकुशो द्वेधा कुशीलो द्विविधस्तथा ।
निर्ग्रन्थः स्नातकश्चैव निर्ग्रन्थाः पञ्च कीर्तिताः ॥ ५८ ॥
सयमश्रुतलेश्याभिर्लिङ्गेन प्रतिसेवया ।
तीर्थस्थानोपपादैश्च विकल्पास्ते यथागमम् ॥ ५९ ॥
इति यो निर्जरातत्त्वं श्रद्धत्ते वेत्त्युपेक्षते ।
शेपतत्त्वैः सम पड्भिः स हि निर्वाणभाग्भवेत् ॥ ६० ॥

इति निर्जरातत्त्वम् ।

---

अनन्तकेवलज्योतिःप्रकाशितजगत्त्रयान् ।
प्रणिपत्य जिनान्मूर्ध्ना मोक्षतत्त्वं प्ररूप्यते ॥ १ ॥
अभावाद्बन्धहेतूनां बन्धनिर्जरया तथा ।
कृत्स्नकर्मप्रमोक्षो हि मोक्ष इत्यभिधीयते ॥ २ ॥
बध्नाति कर्म सद्वेद्यं सयोगः केवली विदुः ।
योगाभावादयोगस्य कर्मबन्धो न विद्यते ॥ ३ ॥

ततो निर्जीर्णनिःशेषपूर्वसञ्चितकर्मणः ।
आत्मनः स्वात्मसंप्राप्तिर्मोक्षः सद्योऽवसीयते ॥ ४ ॥
तथोपशमकादीनां भव्यत्वस्य च संक्षयात् ।
मोक्षः सिद्धत्वसम्यक्त्वज्ञानदर्शनशालिनः ॥ ५ ॥
आद्यं भावान्तभावस्य कर्मबन्धनसन्ततेः ।
अन्ताभावः प्रसज्येत दृष्टत्वादन्तबीजवत् ॥ ६ ॥
दग्धे बीजे यथात्यन्तं प्रादुर्भवति नाङ्कुरः ।
कर्मबीजे तथा दग्धे न रोहति भवाङ्कुरः ॥ ७ ॥
अव्यवस्थानबन्धस्य गवादीनामिवात्मनः ।
कार्यकारणविच्छेदान्मिथ्यात्वादिपरिक्षये ॥ ८ ॥
जानतः पश्यतश्चोर्ध्वं जगत्कारुण्यतः पुनः[1]
तस्य बन्धप्रसङ्गेन[2] सर्वास्रवपरिक्षयात् ॥ ९ ॥
अकस्माच्च न बन्धः स्यादनिर्मोक्षप्रसङ्गतः ।
बन्धोपपत्तिस्तत्र स्यान्मुक्तिप्राप्तेरनन्तरम् ॥ १० ॥
पातोऽपि स्थानबन्धत्वात्तस्य नास्रवतत्त्वतः ।
आस्रवाद्या न पात्रस्य प्रपातोऽधो ध्रुवं भवेत् ॥ ११ ॥
तथापि गौरवाभावान्न पातोऽस्य प्रसज्यते ।
वृन्तसम्बन्धविच्छेदे पतत्याम्रफलं गुरु ॥ १२ ॥
अल्पक्षेत्रे तु सिद्धानामनन्तानां प्रसज्यते ।
परस्परोपरोधोऽपि नावगाहनशक्तितः ॥ १३ ॥
नानादीपप्रकाशेषु मूर्त्तिमत्स्वपि दृश्यते ।
न विरोधः प्रदेशेऽल्पे हन्तामूर्त्तेषु किं पुनः ॥ १४ ॥
आकारभावतोऽभावो न च तस्य प्रसज्यते ।
अनन्तरपरित्यक्तशरीराकारधारिणः ॥ १५ ॥

---

१. 'जगत्कारुण्ययोगत.' इत्यपि पाठः । २. 'बन्धप्रसङ्गो न' इत्यपि पाठः ।

शरीरानुविधायित्वे तत्तद्भावाद्विसर्पणम् ।
लोकाकाशप्रमाणस्य तावन्नाकारणत्वत' ॥ १६ ॥
शरावचन्द्रशालादिद्रव्यावष्टम्भयोगत. ।
अल्पो महाश्च दीपस्य प्रकाशो जायते यथा ॥ १७ ॥
सहारे च विसर्पे च तथात्मानात्मयोगतः ।
तदभावात्तु मुक्तस्य न संहारविसर्पणे ॥ १८ ॥
कस्यचिच्छृङ्खलामोक्षे तत्रावस्थानदर्शनात् ।
अवस्थानं न मुक्तानामूर्ध्वव्रज्यात्मकत्वत' ॥ १९ ॥
सम्यक्त्वज्ञानचारित्रसंयुक्तस्यात्मनो भृशम् ।
निरास्रवत्वाच्छिन्नायां नवायां कर्मसन्ततौ ॥ २० ॥
पूर्वार्जितं क्षपयतो यथोक्तैः क्षयहेतुभिः ।
संसारबीजं कात्स्न्येंन मोहनीय प्रहीयते ॥ २१ ॥
ततोऽन्तरायज्ञानघ्नदर्शनघ्नान्यनन्तरम् ।
प्रहीयन्तेऽस्य युगपत्त्रीणि कर्माण्यशेषतः ॥ २२ ॥
गर्भसूच्यां विनष्टायां यथा वालो विनश्यति ।
तथा कर्मक्षयं याति मोहनीये क्षयं गते ॥ २३ ॥
तत. क्षीणचतु.कर्मा प्राप्तोऽथाख्यातसंयमम् ।
बीजबन्धननिर्मुक्तः स्नातक परमेश्वरः ॥ २४ ॥
शेपकर्मफलापेक्ष' शुद्धो बुद्धो निरामयः ।
सर्वज्ञ' सर्वदर्शी च जिनो भवति केवली ॥ २५ ॥
कृत्स्नकर्मक्षयादूर्ध्वं निर्वाणमधिगच्छति ।
यथा दग्धेन्धनो वह्निर्निरुपादानसन्ततिः ॥ २६ ॥
तदनन्तरमेवोर्ध्वमालोकान्तात्स गच्छति ।
पूर्वप्रयोगासङ्गत्वाद्बन्धच्छेदोर्ध्वगौरवै. ॥ २७ ॥
कुलालचक्र डोलायामिषौ चापि यथेष्यते ।
पूर्वप्रयोगात्कर्मेह तथा सिद्धगतिः स्मृता ॥ २८ ॥

मृल्लेपसङ्गनिर्मोक्षाद्यथा दृष्टाऽप्स्वलाम्बुनः ।
कर्मबन्धविनिर्मोक्षात्तथा सिद्धगतिः स्मृता ॥ २९ ॥
एरण्डस्फुटदेलासु बन्धच्छेदाद्यथा गतिः ।
कर्मबन्धनविच्छेदाज्जीवस्यापि तथेष्यते ॥ ३० ॥
यथाधस्तिर्यगूर्ध्वं च लोष्टवाय्वग्निवीचयः ।
स्वभावतः प्रवर्तन्ते तथोर्ध्वगतिरात्मनाम् ॥ ३१ ॥
ऊर्ध्वगौरवधर्माणो जीवा इति जिनोत्तमैः ।
अधोगौरवधर्माणः पुद्गला इति चोदितम् ॥ ३२ ॥
अतस्तु गतिवैकृत्यं तेषां यदुपलभ्यते ।
कर्मणः प्रतिघाताच्च प्रयोगाच्च तदिष्यते ॥ ३३ ॥
अधस्तिर्यक्तथोर्ध्वं च जीवानां कर्मजा गतिः ।
ऊर्ध्वमेव स्वभावेन भवति क्षीणकर्मणाम् ॥ ३४ ॥
द्रव्यस्य कर्मणो यद्वदुत्पत्त्यारम्भवीचयः ।
समं तथैव सिद्धस्य गतिर्मोक्षे भवक्षयात् ॥ ३५ ॥
उत्पत्तिश्च विनाशश्च प्रकाशतमसोरिह ।
युगपद्भवतो यद्वत्तद्वन्निर्वाणकर्मणोः ॥ ३६ ॥
ज्ञानावरणहानान्ते केवलज्ञानशालिनः ।
दर्शनावरणच्छेदादुद्यत्केवलदर्शनाः ॥ ३७ ॥
वेदनीयसमुच्छेदादव्याबाधत्वमाश्रिताः ।
मोहनीयसमुच्छेदात्सम्यक्त्वमचलं श्रिताः ॥ ३८ ॥
आयुःकर्मसमुच्छेदात्परमं सौक्ष्म्यमाश्रिताः ।
नामकर्मसमुच्छेदादवगाहनशालिनः ॥ ३९ ॥
गोत्रकर्मसमुच्छेदात्सदाऽगौरवलाघवा. ।
अन्तरायसमुच्छेदादनन्तवीर्यमाश्रिता. ॥ ४० ॥
काललिङ्गगतिक्षेत्रतीर्थज्ञानावगाहनैः ।
बुद्धबोधितचारित्रसङ्ख्याल्पबहुतान्तरैः ॥ ४१ ॥

प्रत्युत्पन्ननयादेशात्तत प्रज्ञापनादपि ।
अप्रमत्तैर्बुधै. सिद्धाः साधनीया यथागमम् ॥ ४२ ॥
तादात्म्यादुपयुक्तास्ते केवलज्ञानदर्शने ।
सम्यक्त्वसिद्धतावस्था हेत्वभावाच्च निःक्रियाः ॥ ४३ ॥
ततोऽप्यूर्ध्वंगतिस्तेषां कस्मान्नास्तीति चेन्मतिः ।
धर्मास्तिकायस्याभावात्स हि हेतुर्गतेः परं ॥ ४४ ॥
संसारविषयातीतं सिद्धानामव्यय सुखम् ।
अव्याबाधमिति प्रोक्तं परमं परमर्षिभिः ॥ ४५ ॥
स्यादेतदशरीरस्य जन्तोर्नष्टाष्टकर्मणः ।
कथं भवति मुक्तस्य सुखमित्युत्तरं श्रृणु ॥ ४६ ॥
लोके चतुर्ष्विहार्थेषु सुखशब्द. प्रयुज्यते ।
विषये वेदनाभावे विपाके मोक्ष एव च ॥ ४७ ॥
सुखो वह्निः सुखो वायुर्विषयेष्विह कथ्यते ।
दुःखाभावे च पुरुष. सुखितोऽस्मीति भाषते ॥ ४८ ॥
पुण्यकर्मविपाकाच्च सुखमिष्टेन्द्रियार्थजम् ।
कर्मक्लेशविमोक्षाच्च मोक्षे सुखमनुत्तमम् ॥ ४९ ॥
सुषुप्तावस्थया तुल्यां केचिदिच्छन्ति निर्वृतिम् ।
तदयुक्तं क्रियावत्त्वात्सुखातिशयतस्तथा ॥ ५० ॥
श्रमक्लमभदव्याधिमदनेभ्यश्च संभवात् ।
मोहोत्पत्तिविकाराच्च दर्शनघ्नस्य कर्मण. ॥ ५१ ॥
लोके तत्सदृशो ह्यर्थः कृत्स्नेऽप्यन्यो न विद्यते ।
उपमीयेत तद्येन तस्मान्निरुपमं स्मृतम् ॥ ५२ ॥
लिङ्गप्रसिद्धे सामान्यमनुमानोपमानयोः ।
अत्यन्तं चाप्रसिद्धं यत्तत्तेनानुपमं स्मृतम् ॥ ५३ ॥

---

१ 'विपाकाच्च' इत्यपि पाठ. ।

प्रत्यक्षं तद्भगवतामर्हतां तैः प्रभाषितम् ।
गृह्यतेऽस्तीत्यतः प्राज्ञैर्न च्छद्मस्थपरीक्षया ॥ ५४ ॥
इत्येतन्मोक्षतत्त्वं यः श्रद्धत्ते वेत्त्युपेक्षते ।
शेषतत्त्वैः समं षड्भिः स हि निर्वाणभाग्भवेत् ॥ ५५ ॥

इति मोक्षतत्त्ववर्णनम् ।

---

## उपसंहारः

प्रमाणनयनिक्षेपनिर्देशादिसदादिभिः ।
सप्ततत्त्वीमिति ज्ञात्वा मोक्षमार्गं समाश्रयेत् ॥ १ ॥
निश्चयव्यवहाराभ्यां मोक्षमार्गो द्विधा स्थितः ।
तत्राद्यः साध्यरूपः स्याद्द्वितीयस्तस्य साधनम् ॥ २ ॥
श्रद्धानाधिगमोपेक्षाः शुद्धस्य स्वात्मनो हि याः ।
सम्यक्त्वज्ञानवृत्तात्मा मोक्षमार्गः स निश्चयः ॥ ३ ॥
श्रद्धानाधिगमोपेक्षा याः पुनः स्युः परात्मना ।
सम्यक्त्वज्ञानवृत्तात्मा स मार्गो व्यवहारतः ॥ ४ ॥
श्रद्दधानः परद्रव्यं बुध्यमानस्तदेव हि ।
तदेवोपेक्षमाणश्च व्यवहारी स्मृतो मुनिः ॥ ५ ॥
स्वद्रव्यं श्रद्दधानस्तु बुध्यमानस्तदेव हि ।
तदेवोपेक्षमाणश्च निश्चयान्मुनिसत्तमः ॥ ६ ॥
आत्मा ज्ञातृतया ज्ञानं सम्यक्त्वं चरितं हि सः ।
स्वस्थो दर्शनचारित्रमोहाभ्यामनुपप्लुतः ॥ ७ ॥
पश्यति स्वस्वरूपं यो जानाति च चरत्यपि ।
दर्शनज्ञानचारित्रत्रयमात्मैव स स्मृतः ॥ ८ ॥
पश्यति स्वस्वरूपं यं जानाति च चरत्यपि ।
दर्शनज्ञानचारित्रत्रयमात्मैव तन्मयः ॥ ९ ॥
दृश्यते येन रूपेण ज्ञायते चर्यतेऽपि च ।

दर्शनज्ञानचारित्रत्रयमात्मैव तन्मयः ॥ १० ॥
यस्मै पश्यति जानाति स्वरूपाय चरत्यपि ।
दर्शनज्ञानचारित्रत्रयमात्मैव तन्मयः ॥ ११ ॥
यस्मात्पश्यति जानाति स्व स्वरूपाच्चरत्यपि ।
दर्शनज्ञानचारित्रत्रयमात्मैव तन्मयः ॥ १२ ॥
यस्य पश्यति जानाति स्वरूपस्य चरत्यपि ।
दर्शनज्ञानचारित्रत्रयमात्मैव तन्मय. ॥ १३ ॥
यस्मिन् पश्यति जानाति स्वस्वरूपे चरत्यपि ।
दर्शनज्ञानचारित्रत्रयमात्मैव तन्मयः ॥ १४ ॥
ये स्वभावाद्दृशिज्ञप्तिचर्यारूपक्रियात्मका' ।
दर्शनज्ञानचारित्रत्रयमात्मैव तन्मयः ॥ १५ ॥
दर्शनज्ञानचारित्रगुणानां य इहाश्रयः ।
दर्शनज्ञानचारित्रत्रयमात्मैव स स्मृतः ॥ १६ ॥
दर्शनज्ञानचारित्रपर्यायाणां य आश्रयः ।
दर्शनज्ञानचारित्रत्रयमात्मैव स स्मृतः ॥ १७ ॥
दर्शनज्ञानचारित्रप्रदेशा ये प्ररूपिताः ।
दर्शनज्ञानचारित्रमयस्यात्मन एव ते ॥ १८ ॥
दर्शनज्ञानचारित्रागुरुलघ्वाह्वया गुणाः ।
दर्शनज्ञानचारित्रमयस्यात्मन एव ये ॥ १९ ॥
दर्शनज्ञानचारित्रध्रौव्योत्पादव्ययास्तु ये ।
दर्शनज्ञानचारित्रमयस्यात्मन एव ते ॥ २० ॥
स्यात्सम्यक्त्वज्ञानचारित्ररूपः पर्यायार्थादेशतो मुक्तिमार्गः ।
एको ज्ञाता सर्वदैवाद्वितीयः स्याद्द्रव्यार्थादेशतो मुक्तिमार्गः ॥२१॥
तत्त्वार्थसारमिति यः समधिर्विदित्वा
निर्वाणमार्गमधितिष्ठति निःप्रकम्पः ।

संसारबन्धमवधूय स धूतमोह-
श्चैतन्यरूपमचलं शिवतत्त्वमेति ॥ २२ ॥

वर्णाः पदानां कर्त्तारो वाक्यानां तु पदावलिः ।
वाक्यानि चास्य शास्त्रस्य कर्तृणि न पुनर्वयम् ॥ २३ ॥

इति श्रीमदमृतचन्द्रसूरीणा कृतिः तत्त्वार्थसारो नाम मोक्षशास्त्रं समाप्तम् ।

---

ॐ

श्रीमद्देवसेनविरचिता

# आलापपद्धतिः।

( ७ )

गुणानां विस्तरं वक्ष्ये स्वभावानां तथैव च।
पर्यायाणां विशेषेण नत्वा वीरं जिनेश्वरम्॥ १॥

आलापपद्धतिर्वचनरचनाऽनुक्रमेण नयचक्रस्योपरि उच्यते। सा च किमर्थम्? द्रव्यलक्षणसिद्ध्यर्थम् स्वभावसिद्ध्यर्थञ्च। द्रव्याणि कानि? जीवपुद्गलधर्माधर्माकाशकालद्रव्याणि। सद्द्रव्यलक्षणम् उत्पादव्ययध्रौव्ययुक्तं सत्। इति द्रव्याधिकारः।

लक्षणानि कानि? अस्तित्वं, वस्तुत्वं, द्रव्यत्वं, प्रमेयत्वं, अगुरुलघुत्व[1], प्रदेशत्व[2], चेतनत्वमचेतनत्वं मूर्तत्वममूर्तत्वं द्रव्याणां दश सामान्यगुणाः प्रत्येकमष्टावष्टौ सर्वेषाम्।

[ एकैकद्रव्ये अष्टौ अष्टौ गुणा भवन्ति। जीवद्रव्ये अचेतनत्वं मूर्त्तत्वंच नास्ति, पुद्गलद्रव्ये चेतनत्वममूर्तत्वंच नास्ति, धर्माधर्माकाशकालद्रव्येषु चेतनत्वं मूर्तत्वं च नास्ति। एवं द्विद्विगुणवर्जिते अष्टौ अष्टौ गुणा प्रत्येकद्रव्ये भवन्ति[3]। ]

ज्ञानदर्शनसुखवीर्याणि स्पर्शरसगन्धवर्णाः गतिहेतुत्वं स्थितिहेतुत्वमवगाहनहेतुत्वं वर्त्तनाहेतुत्वं चेतनत्वमचेतनत्वं मूर्तत्वममूर्तत्वं द्रव्याणां षोडश विशेषगुणाः। षोडशविशेषगुणेषु जीवपुद्गलयो षडिति। जीवस्य ज्ञानदर्शनसुखवीर्याणि चेतनत्वममूर्तत्वमिति षट्। पुद्गलस्य स्पर्शरसगन्धवर्णाः मूर्त्तत्वमचेतनत्वमिति षट्। इतरेषां धर्माधर्माकाशकालानां प्रत्येकं त्रयो गुणाः। धर्मद्रव्ये

---

१ सूक्ष्मा अवाग्गोचरा प्रतिक्षण वर्तमाना आगमप्रामाण्यदभ्युपगम्या अगुरुलघुगुणा। २ क्षेत्रत्वम् अविभागि पुद्गलपरमाणुनावष्टब्धम्। ३ इति खपुस्तकेऽधिकपाठः।

गतिहेतुत्वममूर्तत्वमचेतनत्वमेते त्रयो गुणाः। अधर्मद्रव्ये स्थितिहेतुत्वममूर्तत्वमचेतनत्वमिति। आकाशद्रव्ये अवगाहनहेतुत्वममूर्तत्वमचेतनत्वमिति। कालद्रव्ये वर्त्तनाहेतुत्वममूर्तत्वमचेतनत्वमिति विशेषगुणाः। अन्तस्थाश्चत्वारो गुणाः स्वजात्यपेक्षया[1] सामान्यगुणा विजात्यपेक्षया तएव विशेषगुणाः। इति गुणाधिकारः।

गुणविकाराः पर्यायास्ते द्वेधा स्वभावविभावपर्यायभेदात्। अगुरुलघुविकाराः स्वभावपर्यायास्ते द्वादशधा षड्वृद्धिरूपाः षड्ढानिरूपाः। अनन्तभागवृद्धिः, असंख्यातभागवृद्धिः, संख्यातभागवृद्धिः, संख्यातगुणवृद्धिः, असंख्यातगुणवृद्धिः, अनन्तगुणवृद्धिः, एवं षड्वृद्धिरूपास्तथा अनन्तभागहानिः,असंख्यातभागहानिः,संख्यातभागहानिः, संख्यातगुणहानिः,असंख्यातगुणहानिः,अनन्तगुणहानिः एवं षड्ढानिरूपा ज्ञेयाः। विभावद्रव्यव्यञ्जनपर्यायाश्चतुर्विधा नरनारकादिपर्याया. अथवा चतुरशीतिलक्षा योनयः। विभावगुणव्यञ्जनपर्याया मत्यादयः। स्वभावद्रव्यव्यञ्जनपर्यायाश्चरमशरीरात्किञ्चिन्न्यूनसिद्धपर्यायाः। स्वभावगुणव्यञ्जनपर्याया अनन्तचतुष्टयस्वरूपा जीवस्य। पुद्गलस्य तु द्व्यणुकादयो विभावद्रव्यव्यञ्जनपर्यायाः। रसरसान्तरगन्धगन्धान्तरादिविभावगुणव्यञ्जनपर्यायाः। अविभागिपुद्गलपरमाणुः स्वभावद्रव्यव्यञ्जनपर्यायः। वर्णगन्धरसैकैकाविरुद्धस्पर्शद्वयं स्वभावगुणव्यञ्जनपर्यायाः।

अनाद्यनिधने[3] द्रव्ये स्वपर्यायाः प्रतिक्षणम्।
उन्मज्जन्ति निमज्जन्ति जलकल्लोलवज्जले ॥१॥
धर्माधर्मनभःकाला अर्थपर्यायगोचराः।
व्यञ्जनेन तु संबद्धौ द्वावन्यौ जीवपुद्गलौ ॥ २ ॥

इति पर्यायाधिकारः। गुणपर्ययवद्द्रव्यम्।

---

१ द्रव्यक्षेत्रकालभावापेक्षया। २ स्वभावपर्याया. सर्वद्रव्येषु विभावपर्याया जीवपुद्गलयोश्च। ३ आद्यन्तरहिते।

स्वभावाः कथ्यन्ते। अस्ति[1]स्वभावः, नास्ति[2]स्वभावः, नित्य[3]स्वभावः अनित्य[4]स्वभावः, एक[5]स्वभाव, अनेकस्वभावः, भेद[6]स्वभावः, अभेदस्वभाव., भव्यस्वभावः। अभव्यस्वभावः, परम[7]स्वभावः, द्रव्याणामेकादश सामान्यस्वभावाः, चेतन[8]स्वभावः, अचेतन[9]स्वभाव., मूर्त[10]स्वभावः, अमूर्तस्वभावः, एकप्रदेशस्वभावः, अनेकप्रदेशस्वभावः, विभावस्वभावः, शुद्धस्वभाव., अशुद्धस्वभावः, उपचरितस्वभाव एते द्रव्याणां दश विशेषस्वभावाः[11]। जीवपुद्गलयोरेकविंशतिः, चेतनस्वभाव. मूर्तस्वभाव., विभावस्वभाव., एकप्रदेशस्वभाव., अशुद्धस्वभाव एतैः पञ्चभिः स्वभावैर्विना धर्मादित्रयाणां षोडश स्वभावाः सन्ति। तत्र बहुप्रदेशं विना कालस्य पञ्चदश[12] स्वभावाः।

एकविंशतिभावाः स्युर्जीवपुद्गलयोर्मताः।
धर्मादीनां षोडश स्यु. काले पञ्चदश स्मृताः ॥ ३ ॥

ते कुतो ज्ञेयाः ? प्रमाणनयविवक्षात.। सम्यग्ज्ञानं प्रमाणम्। तद्द्वेधा प्रत्यक्षेतरभेदात्। अवधिमन.पर्ययावेकदेशप्रत्यक्षौ। केवल सकलप्रत्यक्ष। मतिश्रुते परोक्षे। प्रमाणमुक्तं। तदवयवा नयाः।

नयभेदा उच्यन्ते,—

णिच्छ[13]यववहारणया मूलमभेयाण याण सव्वाणं।

---

१ स्वभावलाभादच्युतत्वादग्निदाहवदस्तिस्वभाव । २ परस्वरूपेणाभावान्नास्तिस्वभाव । ३ निज निज नानापर्यायेषु तदेवेदमिति द्रव्यस्योपलम्भान्नित्यस्वभाव । ४ तस्याप्यनेकपर्यायपरिणामित्वादनित्यस्वभाव । ५ स्वभावानामेकाधारत्वादेकस्वभावः । ६ गुणगुण्यादिसञ्ज्ञाभेदाद्भेदस्वभाव । ७ पारिणामिकभावप्रधानत्वेन परमस्वभाव. । ८ असद्भूतव्यवहारेण कर्मनोकर्मणोरपि चेतनस्वभाव । ९ जीवस्याप्यसद्भूतव्यवहारेणाचेतनस्वभावः । १० जीवस्याप्यसद्भूतव्यवहारेण मूर्तस्वभाव । ११ "तत्कालपर्ययाक्रान्त वस्तु भावो विधीयते" १२ तस्य एकप्रदेशसम्भवात्। १३ निश्चयनया द्रव्यस्थिता. व्यवहारनयाः पर्यायस्थिता.।

नित्योद्योतमखण्डमेकमतुलालोकं स्वभावप्रभा-
प्राग्भारं समयस्य सारममलं नाद्यापि पश्यन्ति ते ॥ ४८ ॥
व्यवहारविमूढदृष्टय. परमार्थं कलयन्ति नो जनाः ।
तुषबोधविमुग्धबुद्धयः कलयन्तीह तुषं न तन्दुलम् ॥ ४९ ॥
द्रव्यलिङ्गममकारमीलितैर्दृश्यते समयसार एव न ।
द्रव्यलिङ्गमिह यत्किलान्यतो ज्ञानमेकमिदमेव हि स्वतः॥ ५० ॥
अलमलमतिजल्पैर्दुर्विकल्पैरनल्पै-
रयमिह परमार्थश्चेत्यतां नित्यमेकः ।
स्वरसविसरपूर्णज्ञानविस्फूर्तिमात्रा-
न्न खलु समयसारादुत्तरं किञ्चिदस्ति ॥ ५१ ॥
इदमेकं जगच्चक्षुरक्षयं याति पूर्णताम् ।
विज्ञानघनमानन्दमयमध्यक्षतां नयत् ॥ ५२ ॥
इतीदमात्मनस्तत्त्वं ज्ञानमात्रमवस्थितं ।
अखण्डमेकमचलं स्वसंवेद्यमबाधितम् ॥ ५३ ॥

इति सर्वविशुद्धिज्ञानाधिकारः ॥ १० ॥

अत्र स्याद्वादशुद्ध्यर्थं वस्तुतत्त्वव्यवस्थितिः ।
उपायोऽपेयभावश्च मनाग्भूयोऽपि चिन्त्यते ॥ १ ॥
बाह्यार्थैः परिपीतमुज्झितनिजप्रव्यक्तिरिक्तीभव-
द्विश्रान्तं पररूप एव परितो ज्ञानं पशोः सीदति ।
यत्तत्तत्तदिह स्वरूपत इति स्याद्वादिनस्तत्पुन-
र्दूरोन्मग्नघनस्वभावभरतः पूर्णं समुन्मज्जति ॥ २ ॥
विश्वं ज्ञानमिति प्रतर्क्य सकलं दृष्ट्वा स्वतत्त्वाशया
भूत्वा विश्वमयः पशुः पशुरिव स्वच्छन्दमाचेष्टते ।
यत्तत्तत्पररूपतो न तदिति स्याद्वाददर्शी पुन-
र्विश्वाद्भिन्नमविश्वविश्वघटितं तस्य स्वतत्त्वं स्पृशेत् ॥ ३ ॥
बाह्यार्थग्रहणस्वभावभरतो विष्वग्विचित्रोल्लसद्

ज्ञेयाकारविशीर्णशक्तिरभितस्त्रुट्यन्पशुर्नश्यति ।
एकद्रव्यतया सदाऽप्युदितया भेदभ्रमं ध्वंसयन्-
नेकं ज्ञानमबाधितानुभवनं पश्यत्यनेकान्तवित् ॥ ४ ॥
ज्ञेयाकारकलङ्कमेचकचिति प्रक्षालनं कल्पय-
न्नेकाकारचिकीर्षया स्फुटमपि ज्ञानं पशुर्नेच्छति ।
वैचित्र्येऽप्यविचित्रतामुपगतं ज्ञानं स्वतः क्षालितं
पर्य्यायैस्तदनेकतां परिमृशन्पश्यत्यनेकान्तवित् ॥ ५ ॥
प्रत्यक्षालिखितस्फुटस्थिरपरद्रव्यास्तितावञ्चितः
स्वद्रव्यानवलोकनेन परितः शून्यः पशुर्नश्यति ।
स्वद्रव्यास्तितया निरूप्य निपुणं सद्यः समुन्मज्जता
स्याद्वादी तु विशुद्धबोधमहसा पूर्णो भवन् जीवति ॥ ६ ॥
सर्वद्रव्यमयं प्रपद्य पुरुषं दुर्वासनावासितः
स्वद्रव्यभ्रमतः पशुः किल परद्रव्येषु विश्राम्यति ।
स्याद्वादी तु समस्तवस्तुषु परद्रव्यात्मना नास्तितां
जानन्निर्मलशुद्धबोधमहिमा स्वद्रव्यमेवाश्रयेत् ॥ ७ ॥
भिन्नक्षेत्रनिषण्णबोध्यनियतव्यापारनिष्ठः सदा
सीदत्येव बहिः पतन्तमभितः पश्यन्पुमांसं पशुः ।
स्वक्षेत्रास्तितया निरुद्धरभसः स्याद्वादवेदी पुन-
स्तिष्ठत्यात्मनि खातबोध्यनियतव्यापारशक्तिर्भवन् ॥ ८ ॥
स्वक्षेत्रस्थितये पृथग्विधपरक्षेत्रस्थितार्थोज्झना-
त्तुच्छीभूय पशुः प्रणश्यति चिदाकारान्सहार्थैर्वमन् ।
स्याद्वादी तु वसन् स्वधामनि परक्षेत्रे विदन्नास्तितां
त्यक्तार्थोऽपि न तुच्छतामनुभवत्याकारकर्षी परान् ॥ ९ ॥
पूर्वालम्बितबोध्यनाशसमये ज्ञानस्य नाशं विदन्
सीदत्येव न किञ्चनापि कलयन्नत्यन्ततुच्छः पशुः ।
अस्तित्वं निजकालतोऽस्य कलयन् स्याद्वादवेदी पुन

पूर्णस्तिष्ठति बाह्यवस्तुषु मुहुर्भूत्वा विनश्यत्स्वपि ॥ १० ॥
अर्थालम्बनकाल एव कलयन् ज्ञानस्य सत्त्वं बहि-
र्ज्ञेयालम्बनलालसेन मनसा भ्राम्यन्पशुर्नश्यति ।
नास्तित्वं परकालतोऽस्य कलयन् स्याद्वादवेदी पुन-
स्तिष्ठत्यात्मनि खातनित्यसहजज्ञानैकपुञ्जीभवन् ॥ ११ ॥
विश्रान्तः परभावभावकलनान्नित्यं बहिर्वस्तुषु
नश्यत्येव पशुः स्वभावमहिमन्येकान्तनिश्चेतनः ।
सर्वस्मान्नियतस्वभावमभवन् ज्ञानाद्विभक्तो भवन्
स्याद्वादी तु न नाशमेति सहजस्पष्टीकृतप्रत्यय ॥ १२ ॥
अध्यास्यात्मनि सर्वभावभवनं शुद्धस्वभावच्युतः
सर्वत्राप्यनिवारितो गतभयः स्वैरं पशुः क्रीडति ।
स्याद्वादी तु विशुद्ध एव लसति स्वस्य स्वभावं भरा-
दारूढः परभावभावविरहव्यालोकनिष्कम्पितः ॥ १३ ॥
प्रादुर्भावविराममुद्रितवहद्[1]ज्ञानांशनानात्मना
निर्ज्ञानात् क्षणभङ्गसङ्गपतितः प्रायः पशुर्नश्यति ।
स्याद्वादी तु चिदात्मना परिमृशंश्चिद्वस्तु नित्योदितं
टङ्कोत्कीर्णघनस्वभावमहिमज्ञानं भवन् जीवति ॥ १४ ॥
टङ्कोत्कीर्णविशुद्धबोधविसराकारात्मतत्त्वाशया
वाञ्छत्युच्छलदच्छचित्परिणतेर्भिन्नं पशुः किञ्चन ।
ज्ञानं नित्यमनित्यतापरिगमेऽप्यासादयत्युज्ज्वलं
स्याद्वादी तदनित्यतां परिमृशंश्चिद्वस्तु वृत्तिक्रमात् ॥ १५ ॥
इत्यज्ञानविमूढानां ज्ञानमात्रं प्रसादयन् ।
आत्मतत्त्वमनेकान्तः स्वयमेवानुभूयते ॥ १६ ॥
एवं तत्त्वव्यवस्थित्या स्वं व्यवस्थापयन्स्वयम् ।

---

१ 'महत्' इत्यपि पाठः ।

अलङ्घ्यं शासनं जैनमनेकान्तो व्यवस्थितः ॥ १७ ॥
इत्याद्यनेकनिजशक्तिसुनिर्भरोऽपि
यो ज्ञानमात्रमयतां न जहाति भावः ।
एवं क्रमाक्रमविवर्तिविवर्तचित्रं
तद्द्रव्यपर्य्ययमयं चिदिहास्ति वस्तु ॥ १८ ॥
नैकान्तसङ्गतदृशा स्वयमेव वस्तु-
तत्त्वव्यवस्थितिमिति प्रविलोकयन्तः ।
स्याद्वादशुद्धिमधिकामधिगम्य सन्तो
ज्ञानीभवन्ति जिननीतिमलङ्घयन्तः ॥ १९ ॥
ये ज्ञानमात्रनिजभावमयीमकम्पां
भूमिं श्रयन्ति कथमप्यपनीतमोहाः ।
ते साधकत्वमधिगम्य भवन्ति सिद्धाः
मूढास्त्वमूमनुपलभ्य परिभ्रमन्ति ॥ २० ॥
स्याद्वादकौशलसुनिश्चलसंयमाभ्यां
यो भावयत्यहरहः स्वमिहोपयुक्त.।
ज्ञानक्रियानयपरस्परतीव्रमैत्री-
पात्रीकृतः श्रयति भूमिमिमां स एकः ॥ २१ ॥
चित्पिण्डचण्डिमविलासिविकासहासः
शुद्धः प्रकाशभरनिर्भरसुप्रभातः ।
आनन्दसुस्थितसदास्खलितैकरूप-
स्तस्यैव चायमुदयत्यचलार्चिरात्मा ॥ २२ ॥
स्याद्वाददीपितलसन्महसि प्रकाशे
शुद्धस्वभावमहिमन्युदिते मयीति ।
किं बन्धमोक्षपथपातिभिरन्यभावै-
र्नित्योदयः परमयं स्फुरतु स्वभावः ॥ २३ ॥
चित्रात्मशक्तिसमुदायमयोऽयमात्मा

सद्यः प्रणश्यति नयेक्षणखण्ड्यमानः ।
तस्मादखण्डमनिराकृतखण्डमेक-
मेकान्तशान्तमचलं चिदहं महोऽस्मि ॥ २४ ॥
योऽयं भावो ज्ञानमात्रोऽहमस्मि ज्ञेयो ज्ञेयज्ञानमात्रः स नैव ।
ज्ञेयो ज्ञेयज्ञानकल्लोलवल्गद् ज्ञानज्ञेयज्ञातृवद्वस्तुमात्रः ॥ २५ ॥
क्वचिल्लसति मेचकं क्वचिदमेचकामेचकं
क्वचित्पुनरमेचकं सहजमेव तत्त्वं मम ।
तथापि न विमोहयत्यमलमेधसां तन्मनः
परस्परसुसंहतप्रकटशक्तिचक्रं स्फुरत् ॥ २६ ॥
इतो गतमनेकतां दधदितः सदाप्येकता-
मितः क्षणविभङ्गुरं ध्रुवमितः सदैवोदयात् ।
इतः परमविस्तृतं धृतमितः प्रदेशैर्निजै-
रहो सहजमात्मनस्तदिदमद्भुतं वैभवम् ॥ २७ ॥
कषायकलिरेकतः स्खलति शान्तिरस्त्येकतो
भवोपहतिरेकतः स्पृशति मुक्तिरप्येकतः ।
जगत्त्रितयमेकतः स्फुरति चिच्चकास्त्येकतः
स्वभावमहिताऽऽत्मनो विजयतेऽद्भुतादद्भुतः ॥ २८ ॥
जयति सहजतेजःपुञ्जमज्जत्त्रिलोकी-
स्खलदखिलविकल्पोऽप्येक एव स्वरूपः ।
स्वरसविसरपूर्णाच्छिन्नतत्त्वोपलम्भः
प्रसभनियमितार्चिश्चिच्चमत्कार एषः ॥ २९ ॥
अविचलितचिदात्मन्यात्मनात्मानमात्म-
न्यनवरतनिमग्नं धारयद्ध्वस्तमोहम् ।
उदितममृतचन्द्रज्योतिरेतत्समन्ता-
ज्ज्वलतु विमलपूर्णं निःसपत्नस्वभावम् ॥ ३० ॥
यस्माद्द्वैतमभूत्पुरा स्वपरयोर्भूतं यतोऽत्रान्तरं

रागद्वेषपरिग्रहे सति यतो जातं क्रियाकारकैः।
भुञ्जाना चयतोऽनुभूतिरखिलं खिन्ना क्रियायाः फलं
तद्विज्ञानघनौघमग्नमधुना किञ्चिन्न किञ्चित्किल ॥ ३१ ॥
स्वशक्तिसंसूचितवस्तुतत्त्वैर्व्याख्या कृतेयं समयस्य शब्दैः।
स्वरूपगुप्तस्य न किञ्चिदस्ति कर्त्तव्यमेवामृतचन्द्रसूरेः ॥ ३२ ॥

इति समयसारकलशा समाप्ताः॥

---

ॐ

श्रीमन्माणिक्यनन्दिविरचितानि

# परीक्षामुखसूत्राणि ।

## ( १ )

प्रमाणादर्थसंसिद्धिस्तदाभासाद्विपर्य्ययः ।
इति वक्ष्ये तयोर्लक्ष्म सिद्धमल्पं लघीयसः ॥ १ ॥

स्वापूर्वार्थव्यवसायात्मक ज्ञानं प्रमाणं ॥ १ ॥ हिताहितप्राप्तिपरिहारसमर्थं हि प्रमाणं ततो ज्ञानमेव तत् ॥ २ ॥ तन्निश्चयात्मकं समारोपविरुद्धत्वादनुमानवत् ॥३॥ अनिश्चितोऽपूर्वार्थः ॥४॥ दृष्टोऽपि समारोपात्तादृक् ॥५॥ स्वोन्मुखतया प्रतिभासनं स्वस्य व्यवसायः ॥ ६ ॥ अर्थस्येव तदुन्मुखतया ॥ ७ ॥ घटमहमात्मना वेद्मि ॥ ८ ॥ कर्मवत्कर्तृकरणक्रियाप्रतीतेः ॥९॥ शब्दानुच्चारणेऽपि स्वस्यानुभवनमर्थवत् ॥१०॥ को वा तत्प्रतिभासिनमर्थमध्यक्षमिच्छंस्तदेव तथा नेच्छेत् ॥११॥ प्रदीपवत् ॥१२॥ तत्प्रामाण्यं स्वतः परतश्च ॥१३॥

इति प्रमाणस्य स्वरूपोद्देश प्रथमः ॥ १ ॥

तद्द्वेधा ॥१॥ प्रत्यक्षेतरभेदात् ॥२॥ विशदं प्रत्यक्षं ॥३॥ प्रतीत्यन्तराव्यवधानेन विशेषवत्तया वा प्रतिभासन वैशद्य ॥४॥ इन्द्रियानिन्द्रियनिमित्त देशतः सांव्यवहारिकम् ॥ ५ ॥ नार्थालोकौ कारणं परिच्छेद्यत्वात्तमोवत् ॥ ६ ॥ तदन्वयव्यतिरेकानुविधानाभावाच्च केशोण्डुकज्ञानवन्नक्तंचरज्ञानवच्च ॥ ७ ॥ अतज्जन्यमपि तत्प्रकाशकं प्रदीपवत् ॥८॥ स्वावरणक्षयोपशमलक्षणयोग्यतया हि प्रतिनियतमर्थं व्यवस्थापयति ॥९॥ कारणस्य च परिच्छेद्यत्वे करणादिना व्यभिचारः ॥१०॥ सामग्रीविशेषविश्लेषिताखिलावरणमतीन्द्रियमशेषतो मुख्य ॥११॥ सावरणत्वे करणजन्यत्वे च प्रतिबन्धसम्भवात् ॥ १२ ॥

इति प्रत्यक्षोद्देश द्वितीय ॥ २ ॥

परोक्षमितरत् ॥१॥ प्रत्यक्षादिनिमित्तं स्मृतिप्रत्यभिज्ञानतर्कानुमा-

नागमभेदं ॥२॥संस्कारोद्बोधनिबन्धना तदित्याकारा स्मृतिः ॥३॥ स देवदत्तो यथा॥४॥ दर्शनस्मरणकारणकं सङ्कलनं प्रत्यभिज्ञानं तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादि ॥५॥ यथा स एवायं देवदत्तः गोसदृशो गवयः गोविलक्षणो महिषः इदमस्माद्दूरं वृक्षोऽयमित्यादि ॥६॥ उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः इदमस्मिन्सत्येव भवत्यसति न भवत्येवेति च ॥७॥ यथाग्नावेव धूमस्तदभावे न भवत्येवेति च ॥८॥ साधनात्साध्यविज्ञानमनुमानं ॥९॥ साध्याविनाभावित्वेन निश्चितो हेतुः॥१०॥ सहक्रमभावनियमोऽविनाभावः॥११॥ सहचारिणोर्व्याप्यव्यापकयोश्च सहभावः ॥१२॥ पूर्वोत्तरचारिणोः कार्यकारणयोश्च क्रमभावः॥१३॥ तर्कात्तन्निर्णयः॥१४॥ इष्टमबाधितमसिद्धं साध्यं ॥ १५ ॥ सन्दिग्धविपर्यस्ताव्युत्पन्नानां साध्यत्वं यथा स्यादित्यसिद्धपदं॥१६॥ अनिष्टाध्यक्षादिबाधितयोः साध्यत्व माभूदितीष्टाबाधितवचनं॥१७॥न चासिद्धवदिष्टं प्रतिवादिनः॥१८॥ प्रत्यायनाय हीच्छा वक्तुरेव ॥ १९ ॥ साध्यं धर्मः क्वचित्तद्विशिष्टो वा धर्मी ॥२०॥पक्ष इति यावत्॥२१॥प्रसिद्धो धर्मी॥२२॥विकल्पसिद्धे तस्मिन्सत्तेतरे साध्ये॥२३॥ अस्ति सर्वज्ञो नास्ति खरविषाणं ॥२४॥ प्रमाणोभयसिद्धे तु साध्यधर्मविशिष्टता ॥२५॥ अग्निमानयं देशः परिणामी शब्द इति यथा ॥२६॥ व्याप्तौ तु साध्यं धर्म एव ॥२७॥ अन्यथा तदघटनात् ॥ २८ ॥ साध्यधर्माधारसन्देहापनोदाय गम्यमानस्यापि पक्षस्य वचनं ॥ २९ ॥ साध्यधर्मिणि साधनधर्मावबोधनाय पक्षधर्मोपसंहारवत् ॥ ३० ॥ को वा त्रिधा हेतुमुक्त्वा समर्थयमानो न पक्षयति ॥ ३१ ॥ एतद्द्वयमेवानुमानाङ्गं नोदाहरणं ॥३२॥ न हि तत्साध्यप्रतिपत्त्यङ्गं तत्र यथोक्तहेतोरेव व्यापारात् ॥ ३३ ॥ तदविनाभावनिश्चयार्थं वा विपक्षे बाधकादेव तत्सिद्धेः ॥ ३४ ॥ व्यक्तिरूपं च निदर्शनं सामान्येन तु व्याप्तिस्तत्रापि तद्विप्रतिपत्तावनवस्थानं स्याद् दृष्टान्तान्तरापेक्षणात् ॥ ३५ ॥ नापि व्या-

हिस्मरणार्थं तथाविधहेतुप्रयोगादेव तत्स्मृतेः ॥ ३६ ॥ तत्परम-भिधीयमानं साध्यधर्मिणि साध्यसाधने सन्देहयति ॥ ३७ ॥ कुतो-ऽन्यथोपनयनिगमने ॥ ३८ ॥ न च ते तदङ्गे, साध्यधर्मिणि हेतुसाध्ययोर्वचनादेवासंशयात् ॥ ३९ ॥ समर्थनं वा वरं हेतुरूप-मनुमानावयवो वाऽस्तु साध्ये तदुपयोगात् ॥४०॥ बालव्युत्पत्त्यर्थं तत्रयोपगमे शास्त्र एवासौ न वादेऽनुपयोगात् ॥ ४१ ॥ दृष्टान्तो द्वेधाऽन्वयव्यतिरेकभेदात् ॥४२॥ साध्यव्याप्तं साधनं यत्र प्रदर्श्यते सोऽन्वयदृष्टान्तः ॥ ४३ ॥ साध्याभावे साधनाभावो यत्र कथ्यते स व्यतिरेकदृष्टान्तः॥४४॥हेतोरुपसंहार उपनयः॥४५॥प्रतिज्ञायास्तु निगमनं॥४६॥ तदनुमानं द्वेधा ॥४७॥ स्वार्थपरार्थभेदात् ॥४८॥ स्वार्थमुक्तलक्षणं ॥४९॥ परार्थं तु तदर्थपरामर्शवचनाज्जातं ॥५०॥ तद्वचनमपि तद्धेतुत्वात् ॥५१॥ स हेतुर्द्विधोपलब्ध्यनुपलब्धिभेदात् ॥५२॥ उपलब्धिर्विधिप्रतिषेधयोरनुपलब्धिश्च ॥५३॥ अविरुद्धोपल-ब्धिर्विधौ षोढा व्याप्यकार्यकरणपूर्वोत्तरसहचरभेदात्॥५४॥रसादे-कसामग्र्यनुमानेन रूपानुमानमिच्छद्भिरिष्टमेव किञ्चित्कारणं हेतुर्यत्र सामर्थ्याप्रतिबन्धकारणान्तरावैकल्ये ॥५५॥ न च पूर्वोत्तरचारिणो-स्तादात्म्यं तदुत्पत्तिर्वा कालव्यवधाने तदनुपलब्धेः ॥ ५६ ॥ भाव्यतीतयोर्मरणजाग्रद्बोधयोरपि नारिष्टोद्बोधौ प्रति हेतुत्वम् ॥ ५७ ॥ तद्व्यापाराश्रितं हि तद्भावभावित्वं ॥ ५८ ॥ सहचा-रिणोरपि परस्परपरिहारेणावस्थानात्सहोत्पादाच्च ॥५९॥ परिणामी शब्दः कृतकत्वात् एवं स एवं दृष्टो यथा घट, कृतकश्चायं, तस्मात्परिणामीति, यस्तु न परिणामी स न कृतको दृष्टो यथा वन्ध्यास्तनन्धयः, कृतकश्चायं, तस्मात्परिणामी ॥ ६० ॥ अस्त्यत्र देहिनि बुद्धिर्व्याहारादेः ॥६१॥ अस्त्यत्र च्छाया छत्रात् ॥ ६२ ॥ उदेष्यति शकटं कृत्तिकोदयात् ॥ ६३ ॥ उदगाद्भरणिः प्राक् तत एव ॥६४॥ अस्त्यत्र मातुलिङ्गे रूपं रसात् ॥६५॥ विरुद्धतदुपल-

ब्धिः प्रतिषेधे तथा ॥६६॥ नास्त्यत्र शीतस्पर्श औष्ण्यात् ॥६७॥ नास्त्यत्र शीतस्पर्शो धूमात् ॥ ६८ ॥ नास्मिन् शरीरिणि सुखमस्ति हृदयशल्यात् ॥६९॥ नोदेष्यति मुहूर्त्तान्ते शकटं रेवत्युदयात् ॥७०॥ नोदगाद्भरणिर्मुहूर्तात्पूर्वं पुष्योदयात् ॥७१॥ नास्त्यत्र भित्तौ परभागाभावोऽर्वाग्भागदर्शनात् ॥७२॥ अविरुद्धानुपलब्धिः प्रतिषेधे सप्तधा-स्वभावव्यापककार्यकारणपूर्वोत्तरसहचरानुपलम्भभेदात् ॥७३॥ नास्त्यत्र भूतले घटोऽनुपलब्धेः ॥७४॥ नास्त्यत्र शिंशपा वृक्षानुपलब्धेः ॥७५॥ नास्त्यत्राप्रतिबद्धसामर्थ्योऽग्निर्धूमानुपलब्धेः॥७६॥ नास्त्यत्र धूमोऽनग्नेः ॥७७॥ न भविष्यति मुहूर्त्तान्ते शकटं कृत्तिकोदयानुपलब्धेः॥७८॥ नोदगाद्भरणिर्मुहूर्तात्प्राक्तत एव॥७९॥नास्त्यत्र समतुलायामुन्नामोऽनामानुपलब्धेः॥८०॥ विरुद्धानुपलब्धिर्विधौ त्रेधा विरुद्धकार्यकारणस्वभावानुपलब्धिभेदात् ॥८१॥ यथास्मिन्प्राणिनि व्याधिविशेषोऽस्ति निरामयचेष्टानुपलब्धेः॥८२॥ अस्त्यत्र देहिनि दुःखमिष्टसंयोगाभावात् ॥ ८३ ॥ अनेकान्तात्मकं वस्त्वेकान्तस्वरूपानुपलब्धेः ॥८४॥ परम्परया संभवत्साधनमत्रैवान्तर्भावनीयम् ॥८५॥ अभूदत्र चक्रे शिवकः स्थासात् ॥८६॥ कार्यकार्यमविरुद्धकार्योपलब्धौ ॥८७॥नास्त्यत्र गुहायां मृगक्रीडनं मृगारिसंशब्दनात् कारणविरुद्धकार्योपलब्धौ यथा॥८८॥ व्युत्पन्नप्रयोगस्तु तथोपपत्त्याऽन्यथानुपपत्त्यैव वा ॥८९॥ अग्निमानयं देशस्तथैव धूमवत्वोपपत्तेर्धूमवत्वानुपपत्तेर्वा ॥९०॥ हेतुप्रयोगो हि यथा व्याप्तिग्रहण विधीयते सा च तावन्मात्रेण व्युत्पन्नैरवधार्यते ॥९१॥ तावता च साध्यसिद्धिः॥९२॥ तेन पक्षस्तदाधारसूचनायोक्त.॥९३॥ आप्तवचनादिनिबन्धनमर्थज्ञानमागमः॥९४॥ सहजयोग्यतासङ्केतवशाद्धि शब्दादयो वस्तुप्रतिपत्तिहेतवः ॥ ९५ ॥ यथा मेर्वादयः सन्ति ॥ ९६ ॥

इति परोक्षप्रपञ्चस्तृतीय. समुद्देश ॥ ३ ॥

सामान्यविशेषात्मा तदर्थो विषयः ॥१॥ अनुवृत्तव्यावृत्तप्रत्ययगो-

चरत्वात्पूर्वोत्तराकारापरिहारावाप्तिस्थितिलक्षणपरिणामेनार्थक्रियोपपत्तेश्च ॥२॥ सामान्यं द्वेधा तिर्यगूर्ध्वताभेदात् ॥३॥ सदृशपरिणामस्तिर्यक् खण्डमुण्डादिषु गोत्ववत् ॥ ४ ॥ परापरविवर्त्तव्यापिद्रव्यमूर्ध्वता मृदिव स्थासादिषु ॥५॥ विशेषश्च ॥६॥ पर्य्यायव्यतिरेकभेदात् ॥ ७ ॥ एकस्मिन्द्रव्ये क्रमभाविनः परिणामाः पर्याया आत्मनि हर्षविषादादिवत् ॥८॥ अर्थान्तरगतो विसदृशपरिणामो व्यतिरेको गोमहिषादिवत् ॥ ९ ॥

इति प्रमाणस्य विषयसमुद्देशश्चतुर्थः ॥ ४ ॥

अज्ञाननिवृत्तिर्हानोपादानोपेक्षाश्च फलम् ॥ १ ॥ प्रमाणादभिन्नं भिन्नं च॥२॥ यः प्रमिमीते स एव निवृत्ताज्ञानो जहात्यादत्त उपेक्षते चेति प्रतीतेः ॥३॥

इति प्रमाणस्य फलसमुद्देशः पञ्चमः ॥ ५ ॥

ततोऽन्यत्तदाभासम्॥ १ ॥ अस्वसंविदितगृहीतार्थदर्शनसंशयादयः प्रमाणाभासाः॥२॥स्वविषयोपदर्शकत्वाभावात्॥३॥पुरुषान्तरपूर्वार्थगच्छत्तृणस्पर्शस्थाणुपुरुषादिज्ञानवत् ॥ ४ ॥ चक्षूरसयोर्द्रव्ये संयुक्तसमवायवच्च ॥ ५ ॥ अवैशद्ये प्रत्यक्षं तदाभासं बौद्धस्याकस्माद्धूमदर्शनाद्वह्निविज्ञानवत् ॥ ६ ॥ वैशद्येऽपि परोक्षं तदाभासं मीमांसकस्य करणज्ञानवत्॥७॥ अतस्मिंस्तदिति ज्ञानं स्मरणाभासं जिनदत्ते स देवदत्तो यथा ॥८॥ सदृशे तदेवेदं तस्मिन्नेव तेन सदृशं यमलकवदित्यादिप्रत्यभिज्ञानाभासः॥९॥असम्बद्धे तज्ज्ञानं तर्काभासं यावांस्तत्पुत्रः स श्यामः इति यथा॥१०॥ इदमनुमानाभासम्॥११॥ तत्रानिष्टादिः पक्षाभासः ॥१२॥ अनिष्टो मीमांसकस्यानित्यः शब्दः ॥१३॥ सिद्धः श्रावणः शब्दः ॥ १४ ॥ बाधितः प्रत्यक्षानुमानागमलोकस्ववचनैः ॥१५॥ तत्र प्रत्यक्षबाधितो यथा अनुष्णोऽग्निर्द्रव्यत्वाज्जलवत्॥१६॥ अपरिणामी शब्दः कृतकत्वात् घटवत्॥१७॥ प्रेत्यासुखप्रदो धर्मः पुरुषाश्रितत्वादधर्मवत्॥१८॥ शुचि नरशिरःकपालं

प्राण्यङ्गत्वाच्छङ्खशुक्तिवत् ॥१९॥ माता मे वन्ध्या पुरुषसंयोगेऽप्यगर्भत्वात्प्रसिद्धवन्ध्यावत्॥२०॥ हेत्वाभासा असिद्धविरुद्धानैकान्तिकाकिञ्चित्कराः॥२१॥असत्सत्तानिश्चयोऽसिद्धः॥२२॥ अविद्यमानसत्ताकः परिणामी शब्दश्चाक्षुषत्वात् ॥२३॥ स्वरूपेणैवासिद्धत्वात् ॥२४॥ अविद्यमाननिश्चयो मुग्धबुद्धिं प्रत्यग्निरत्र धूमात् ॥२५॥ तस्य बाष्पादिभावेन भूतसंघाते संदेहात् ॥२६॥ सांख्यं प्रति परिणामी शब्दः कृतकत्वात्॥२७॥तेनाज्ञातत्वात्॥२८॥विपरीतनिश्चिताविनाभावो विरुद्धोऽपरिणामी शब्दः कृतकत्वात्॥२९॥ विपक्षेऽप्यविरुद्धवृत्तिरनैकान्तिकः॥३०॥निश्चितवृत्तिरनित्यः शब्दः प्रमेयत्वाद् घटवत् ॥३१॥ आकाशे नित्येऽप्यस्य निश्चयात्॥३२॥ शङ्कितवृत्तिस्तु नास्ति सर्वज्ञो वक्तृत्वात् ॥३३॥ सर्वज्ञत्वेन वक्तृत्वाविरोधात् ॥३४॥ सिद्धे प्रत्यक्षादिबाधिते च साध्ये हेतुरकिञ्चित्करः ॥३५॥ सिद्धः श्रावणः शब्दः शब्दत्वात्॥३६॥ किञ्चिदकरणात् ॥३७॥ यथाऽनुष्णोऽग्निर्द्रव्यत्वादित्यादौ किञ्चित्कर्तुमशक्यत्वात् ॥३८॥ लक्षण एवासौ दोषो व्युत्पन्नप्रयोगस्य पक्षदोषेणैव दुष्टत्वात्॥३९॥दृष्टान्ताभासा अन्वयेऽसिद्धसाध्यसाधनोभयाः॥४०॥अपौरुषेयः शब्दोऽमूर्तत्वादिन्द्रियसुखपरमाणुघटवत्॥४१॥विपरीतान्वयश्च यदपौरुषेयं तदमूर्त्तम्॥४२॥ विद्युदादिनाऽतिप्रसङ्गात् ॥४३॥ व्यतिरेकसिद्धतद्व्यतिरेकाः परमाण्विन्द्रियसुखाकाशवत्॥४४॥ विपरीतव्यतिरेकश्च यन्नामूर्त्तं तन्नापौरुषेयम्॥४५॥ बालप्रयोगाभासः पञ्चावयवेषु कियद्धीनता॥४६॥ अग्निमानयं देशो धूमवत्त्वात् तदित्थं यथा महानसः॥४७॥धूमवांश्चायमिति वा॥४८॥ तस्मादग्निमान् धूमवांश्चायम्॥४९॥स्पष्टतया प्रकृतप्रतिपत्तेरयोगात्॥५०॥ रागद्वेषमोहाक्रान्तपुरुषवचनाज्जातमागमाभासम्॥५१॥यथा नद्यास्तीरे मोदकराशयः सन्ति धावध्वं माणवकाः ॥५२॥ अङ्गुल्यग्रे हस्तियूथशतमस्ति इति च॥५३॥ विसंवादात्॥५४ प्रत्यक्षमेवैकं प्रमाणमित्यादिसंख्याभासम्॥५५॥लौकायतिकस्य प्रत्य-

क्षतः परलोकादिनिषेधस्य परबुद्ध्यादेश्चासिद्धेरतद्विषयत्वात् ॥५६॥ सौगतसांख्ययौगप्राभाकरजैमिनीयानां प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावैरेकैकाधिकैर्व्याप्तिवत्॥५७॥ अनुमानादेस्तद्विषयत्वे प्रमाणान्तरत्वम्॥ ५८ ॥ तर्कस्येव व्याप्तिगोचरत्वे प्रमाणान्तरत्वमप्रमाणस्याव्यवस्थापकत्वात् ॥५९॥ प्रतिभासभेदस्य च भेदकत्वात् ॥६०॥ विषयाभासः सामान्यं विशेषो द्वय वा स्वतन्त्रम्॥६१॥तथाप्रतिभासनात्कार्याकरणाच्च ॥६२॥ समर्थस्य करणे सर्वदोत्पत्तिरनपेक्षत्वात् ॥६३॥परापेक्षणे परिणामित्वमन्यथा तदभावात्॥६४॥स्वयमसमर्थस्याकारकत्वात्पूर्ववत् ॥६५॥ फलाभासं प्रमाणादभिन्नं भिन्नमेव वा ॥६६॥ अभेदे तद्व्यवहारानुपपत्तेः॥६७॥ व्यावृत्त्याऽपि न तत्कल्पना फलान्तराद्व्यावृत्त्याऽफलत्वप्रसगात् ॥६८॥ प्रमाणान्तराद्व्यावृत्त्येवाप्रमाणत्वस्य ॥६९॥ तस्माद्वास्तवोऽभेदः ॥७०॥ भेदे त्वात्मान्तरवत्तदनुपपत्तेः॥७१॥ समवायेऽतिप्रसङ्गः ॥७२॥ प्रमाणतदाभासौ दुष्टतयोद्भावितौ परिहृतापरिहृतदोषौ वादिनः साधनतदाभासौ प्रतिवादिनो दूषणभूषणे च ॥ ७३ ॥ सम्भवदन्यद्विचारणीयम्॥ ७४ ॥

परीक्षामुखमादर्शं हेयोपादेयतत्त्वयोः
संविदे मादृशो बालः परीक्षादक्षवद्व्यधाम् ॥ १ ॥

इति प्रमाणस्याभासोद्देशः षष्ठः ॥ ६ ॥

इति परीक्षामुखसूत्राणि समाप्तानि ।

---

ॐ

# आचार्यश्रीविद्यानन्दस्वामिविरचिता

# आप्तपरीक्षा ।

( १० )



प्रबुद्धाशेषतत्त्वार्थबोधदीधितिमालिने ।
नमः श्रीजिनचन्द्राय मोहध्वान्तप्रभेदिने ॥ १ ॥
श्रेयोमार्गस्य संसिद्धिः प्रसादात्परमेष्ठिनः ।
इत्याहुस्तद्गुणस्तोत्रं शास्त्रादौ मुनिपुङ्गवाः ॥ २ ॥
मोक्षमार्गस्य नेतारं भेत्तारं कर्मभूभृताम् ।
ज्ञातारं विश्वतत्त्वानां वन्दे तद्गुणलब्धये ॥ ३ ॥
इत्यसाधारणं प्रोक्तं विशेषणमशेषतः ।
परसङ्कल्पिताप्तानां व्यवच्छेदप्रसिद्धये ॥ ४ ॥
अन्ययोगव्यवच्छेदान्निश्चिते हि महात्मनि ।
तस्योपदेशसामर्थ्यादनुष्ठानं प्रतिष्ठितम् ॥ ५ ॥
तत्रासिद्धं मुनीन्द्रस्य भेत्तृत्वं कर्मभूभृताम् ।
ये वदन्ति विपर्यासात्तान्प्रत्येवं प्रचक्ष्महे ॥ ६ ॥
प्रसिद्धः सर्वशास्त्रज्ञस्तेषां तावत्प्रमाणतः ।
सदा विध्वस्तनिःशेषबाधकात्स्वसुखादिवत् ॥ ७ ॥
ज्ञाता यो विश्वतत्त्वानां स भेत्ता कर्मभूभृताम् ।
भवत्येवान्यथा तस्य विश्वतत्त्वज्ञता कुतः ॥ ८ ॥
नास्पृष्टः कर्मभिः शश्वद्विश्वदृश्वास्ति कश्चन ।
तस्यानुपायसिद्धस्य सर्वथानुपपत्तितः ॥ ९ ॥
प्रणीतिर्मोक्षमार्गस्य न विनाऽनादिसिद्धितः ।
सर्वज्ञादिति तत्सिद्धिर्न परीक्षासहा स हि ॥ १० ॥

प्रणेता मोक्षमार्गस्य नाशरीरोऽन्यमुक्तवत्।
सशरीरस्तु नाकर्म्मा सम्भवत्यज्ञजन्तुवत् ॥ ११ ॥
न चेच्छाशक्तिरीशस्य कर्म्माभावेऽपि युज्यते।
तदिच्छा वानभिव्यक्ता क्रिया हेतुः कुतोऽज्ञवत्॥ १२ ॥
ज्ञानशक्त्यैव निःशेषकार्योत्पत्तौ प्रभुः किल।
सदेश्वर इति ख्यातेऽनुमानमनिदर्शनम्॥ १३ ॥
समीहामन्तरेणापि यथा वक्ति जिनेश्वरः।
तथेश्वरोऽपि कार्य्याणि कुर्य्यादित्यप्यपेशलम् ॥ १४ ॥
सति धर्म्मविशेषे हि तीर्थकृत्त्वसमाह्वये।
ब्रूयाज्जिनेश्वरो मार्गं न ज्ञानादेव केवलात् ॥ १५ ॥
सिद्धस्यापास्तनि.शेपकर्म्मणो वागसम्भवात्।
विना तीर्थकरत्वेन नाम्ना नार्थोपदेशता ॥ १६ ॥
तथा धर्म्मविशेपोऽस्य योगश्च यदि शाश्वतः।
तदेश्वरस्य देहोऽस्तु योग्यन्तरवदुत्तमः ॥ १७ ॥
विग्रहानुग्रहौ देहं स्वं निर्म्मायान्यदेहिनाम्।
करोतीश्वर इत्येतन्न परीक्षाक्षम वचः ॥ १८ ॥
देहान्तराद्विना तावत्स्वदेह जनयेद्यदि।
तदा प्रकृतकार्य्येऽपि देहाधानमनर्थकम् ॥ १९ ॥
देहान्तरात्स्वदेहस्य विधाने चानवस्थितिः।
तथा च प्रकृतं कार्य्यं कुर्य्यादीशो न जातुचित् ॥ २० ॥
स्वयं देहाविधाने तु तेनैव व्यभिचारिता।
कार्य्यत्वादेः प्रयुक्तस्य हेतोरीश्वरसाधने ॥ २१ ॥
यथानीशः स्वदेहस्य कर्त्ता देहान्तरात्मनः।
पूर्वस्मादित्यनादित्वान्नानवस्था प्रसज्यते ॥ २२ ॥
तथेशस्यापि पूर्वस्माद्देहाद्देहान्तरोद्भवात्।
नानवस्थेति यो ब्रूयात्तस्यानीशस्त्वमीशितुः ॥ २३ ॥

अनीशः कर्म्मदेहेवानादिसन्तानवर्तिना ।
यथैव हि सकर्म्माणस्तद्वन्न कथमीश्वरः ॥ २४ ॥
ततो नेशस्य देहोऽस्ति प्रोक्तदोषानुषङ्गतः।
नापि धर्म्मविशेषोऽस्य देहाभावे विरोधतः ॥ २५ ॥
येनेच्छामन्तरेणापि तस्य कार्ये प्रवर्तनम् ।
जिनेन्द्रवद् घटेतेति नोदाहरणसम्भवः ॥ २६ ॥
ज्ञानमीशस्य नित्यं चेदशरीरस्य न क्रमः ।
कार्य्याणामक्रमाद्धेतोः कार्यक्रमविरोधतः ॥ २७ ॥
तद्बोधस्य प्रमाणत्वे फलाभावः प्रसज्यते ।
ततः फलावबोधस्येष्टौ च स्वस्य मतक्षतिः ॥ २८ ॥
फलत्वे तस्य नित्यत्वं न स्यान्मानात्समुद्भवात् ।
ततोऽनुद्भवने तस्य फलत्वं प्रतिहन्यते ॥ २९ ॥
अनित्यत्वे तु तज्ज्ञानस्यानेन व्यभिचारिता ।
कार्यत्वादेर्महेशेनाकरणेऽस्य स्वबुद्धितः ॥ ३० ॥
बुद्ध्यन्तरेण तद्बुद्धेः करणे चानवस्थिति ।
नानादिसन्ततिर्युक्ता कर्म्मसन्तानतो विना ॥ ३१ ॥
अव्यापि च यदि ज्ञानमीश्वरस्य तदा कथम् ।
सकृत्सर्वत्र कार्य्याणामुत्पत्तिर्घटते ततः ॥ ३२ ॥
यद्येकत्र स्थितं देशे ज्ञानं सर्वत्र कार्यकृत् ।
तदा सर्वत्र कार्याणां सकृत्किन्न समुद्भवः ॥ ३३ ॥
कारणान्तरवैकल्यात्तथानुत्पत्तिरित्यपि ।
कार्याणामीश्वरज्ञानाहेतुकत्वं प्रसाधयेत् ॥ ३४ ॥
सर्वत्र सर्वदा तस्य व्यतिरेकाप्रसिद्धितः ।
अन्वयस्यापि सन्देहात्कार्य्यं तद्धेतुकं कथम् ॥ ३५ ॥
एतेनैवेश्वरज्ञानं व्यापि नित्यमपाकृतम् ।
तस्येशवत्सदा कार्य्यक्रमहेतुत्वहानितः ॥ ३६ ॥

अस्वसंविदितं ज्ञानमीश्वरस्य यदीष्यते ।
तदा सर्वज्ञता न स्यात्स्वज्ञानस्याप्रवेदनात् ॥ ३७ ॥
ज्ञानान्तरेण तद्वित्तौ तस्याप्यन्येन वेदनम् ।
वेदनेन भवेदेवमनवस्था महीयसी ॥ ३८ ॥
गत्वा सुदूरमप्येवं स्वसविदितवेदने ।
इष्यमाणे महेशस्य प्रथम तादृगस्तु वः ॥ ३९ ॥
तत्स्वार्थव्यवसायात्मज्ञानं भिन्नं महेश्वरात् ।
कथं तस्येति निर्देश्यमाकाशादिवदञ्जसा ॥ ४० ॥
समवायेन तस्यापि तद्भिन्नस्य कुतो गति· ।
इहेदमिति विज्ञानादबाध्याद्व्यभिचारितम् ॥ ४१ ॥
इह कुण्डे दधीत्यादिविज्ञानेन स विद्विषा ।
साध्ये सम्बन्धमात्रे तु परेषां सिद्धसाधनम् ॥ ४२ ॥
सत्यामयुतसिद्धौ चेन्नेदं साधु विशेषणम् ।
शास्त्रीयायुतसिद्धत्वविरहात्समवायिनोः ॥ ४३ ॥
द्रव्यं स्वावयवाधारं गुणो द्रव्याश्रयो यतः ।
लौकिक्ययुतसिद्धिस्तु भवेद्दुग्धाम्भसोरपि ॥ ४४ ॥
पृथगाश्रयवृत्तित्वं युतसिद्धिर्न चानयोः ।
सास्तीशस्य विभुत्वेन परद्रव्याश्रितिच्युते· ॥ ४५ ॥
ज्ञानस्यापीश्वरादन्यद्रव्यवृत्तित्वहानित· ।
इति येऽपि समादध्युस्तांश्च पर्य्यनुयुज्महे ॥ ४६ ॥
विभुद्रव्यविशेषाणामन्याश्रयविवेकतः ।
युतसिद्धि कथं नु स्यादेकद्रव्यगुणादिषु ॥ ४७ ॥
समवायः प्रसज्येताऽयुतसिद्धौ परस्परम् ।
तेषां तद्वितयासत्त्वे स्याद्व्याघातो दुरुत्तर ॥ ४८ ॥
युतप्रत्ययहेतुत्वाद्युतसिद्धिरितीरणे ।
विभुद्रव्यगुणादीनां युतसिद्धि· समागता ॥ ४९ ॥

ततो नायुतसिद्धिः स्यादित्यसिद्धं विशेषणम् ।
हेतोर्विपक्षतस्तावद्व्यवच्छेदं न साधयेत् ॥ ५० ॥
सिद्धेऽपि समवायस्य समवायिषु दर्शनात् ।
इहेदमिति संवित्तेः साधनं व्यभिचारि तत् ॥ ५१ ॥
समवायान्तराद्वृत्तौ समवायस्य तत्त्वतः ।
समवायिषु तस्यापि परस्मादित्यनिष्ठितः ॥ ५२ ॥
तद्बाधास्तीत्यबाधत्वं नाम नेह विशेषणम् ।
हेतोः सिद्धमनेकान्तो यतोऽनेनेति ये विदुः ॥ ५३ ॥
तेषामिहेति विज्ञानाद्विशेषणविशेष्यता ।
समवायस्य तद्वत्तु तत एव न सिध्यति ॥ ५४ ॥
विशेषणविशेष्यत्वसम्बन्धोऽप्यन्यतो यदि ।
स्वसम्बन्धिषु वर्तेत तदा बाधानवस्थितिः ॥ ५५ ॥
विशेषणविशेष्यत्वप्रत्ययादवगम्यते ।
विशेषणविशेष्यत्वमित्यप्येतेन दूषितम् ॥ ५६ ॥
तस्यानन्त्यात्प्रपत्तृणामाकांक्षाक्षयतोऽपि वा ।
न दोष इति चेदेवं समवायादिनापि किम् ॥ ५७ ॥
गुणादिद्रव्ययोर्भिन्नद्रव्ययोश्च परस्परम् ।
विशेषणविशेष्यत्वसम्बन्धोऽस्तु निरङ्कुशः ॥ ५८ ॥
संयोगः समवायो वा तद्विशेषोऽस्त्वनेकधा ।
स्वातन्त्र्ये समवायस्य सर्वथैक्ये च दोषतः ॥ ५९ ॥
स्वतन्त्रस्य कथं तावदाश्रितत्वं स्वयं मतम् ।
तस्याश्रितत्ववचने स्वातन्त्र्यं प्रतिहन्यते ॥ ६० ॥
समवायिषु सत्स्वेव समवायस्य वेदनात् ।
आश्रितत्वे दिगादीनां मूर्तद्रव्याश्रितिर्न किम् ॥ ६१ ॥
कथं चानाश्रितः सिध्येत्सम्बन्धः सर्वथा क्वचित् ।
स्वसम्बन्धिषु येनातः सम्भवेन्नियमस्थितिः ॥ ६२ ॥

एक एव च सर्वत्र समवायो यदीष्यते ।
तदा महेश्वरे ज्ञान समवैति न खे कथम् ॥ ६३ ॥
इहेति प्रत्ययोऽप्येष शङ्करे न तु खादिषु ।
इति भेदः कथं सिध्येन्नियामकमपश्यतः ॥ ६४ ॥
न चाचेतनता तत्र सम्भाव्येत नियामिका ।
शम्भावपि तदास्थानात्खादेस्तदविशेषतः ॥ ६५ ॥
नेशो ज्ञाता न चाज्ञाता स्वयं ज्ञानस्य केवलम् ।
समवायात्सदा ज्ञाता यद्यात्मैव स किं स्वतः ॥ ६६ ॥
नायमात्मा न चानात्मा स्वात्मत्वसमवायतः ।
सदात्मैवेति चेदेवं द्रव्यमेव स्वतोऽसिधत् ॥ ६७ ॥
नेशो द्रव्य न चाद्रव्यं द्रव्यत्वसमवायतः ।
सर्वदा द्रव्यमेवेति यदि सन्नेव स स्वतः ॥ ६८ ॥
न स्वत. सदसन्नापि सत्त्वेन समवायत ।
सन्नेव शश्वदित्युक्तौ व्याघातः केन वार्यते ॥ ६९ ॥
स्वरूपेणासतः सत्त्वसमवाये च खाम्बुजे ।
स स्यात्किन्न विशेषस्याभावात्तस्य ततोऽञ्जसा ॥ ७० ॥
स्वरूपेण सतः सत्त्वसमवायेऽपि सर्वदा ।
सामान्यादौ भवेत्सत्त्वसमवायोऽविशेषतः ॥ ७१ ॥
स्वतः सतो यथा सत्त्वसमवायस्तथास्तु स. ।
द्रव्यत्वात्मत्वबोद्धृत्वसमवायोऽपि तत्त्वतः ॥ ७२ ॥
द्रव्यस्यैवात्मनो बोद्धु. स्वयं सिद्धस्य सर्वदा ।
न हि स्वतोऽतथाभूतस्तथात्वसमवायभाक् ॥ ७३॥
स्वयं ज्ञत्वे च सिद्धेऽस्य महेशस्य निरर्थकम् ।
ज्ञानस्य समवायेन ज्ञत्वस्य परिकल्पनम् ॥ ७४ ॥
तत्स्वार्थव्यवसायात्मज्ञानतादात्म्यमृच्छतः ।
कथंचिदीश्वरस्यास्ति जिनेशत्वमसंशयम् ॥ ७५ ॥

स एव मोक्षमार्गस्य प्रणेता व्यवतिष्ठते ।
सदेहः सर्वविन्नष्टमोहो धर्म्मविशेपभाक् ॥ ७६ ॥
ज्ञानादन्यस्तु निर्देहः सदेहो वा न युज्यते ।
शिवः कर्त्तोपदेशस्य सोऽभेत्ता कर्म्मभूभृताम् ॥ ७७ ॥
एतेनैव प्रतिव्यूढः कपिलोऽप्युपदेशकः ।
ज्ञानादर्थान्तरत्वस्याविशेषात्सर्वथा स्वतः ॥ ७८ ॥
ज्ञानसंसर्गतो ज्ञत्वमज्ञस्यापि न तत्त्वतः ।
व्योमवच्चेतनस्यापि नोपपद्येत मुक्तवत् ॥ ७९ ॥
प्रधानं ज्ञत्वतो मोक्षमार्गस्यास्तूपदेशकम् ।
तस्यैव विश्ववेदित्वाद्भेत्तृत्वात्कर्म्मभूभृताम् ॥ ८० ॥
इत्यसम्भाव्यमेवास्याचेतनत्वात्पटादिवत् ।
तदसम्भवतो नूनमन्यथा निष्फलः पुमान् ॥ ८१ ॥
भोक्तात्मा चेत्स एवास्तु कर्त्ता तदविरोधतः ।
विरोधे तु तयोर्भोक्तुः स्याद्भुजौ कर्तृता कथम् ॥ ८२ ॥
प्रतानं मोक्षमार्गस्य प्रणेतृ स्तूयते पुमान् ।
मुमुक्षुभिरिति ब्रूयात्कोऽन्योऽकिञ्चित्करात्मनः ॥ ८३ ॥
सुगतोऽपि न निर्वाणमार्गस्य प्रतिपादकः ।
विश्वतत्त्वज्ञतापायात्तत्त्वतः कपिलादिवत् ॥ ८४ ॥
संवृत्या विश्वतत्त्वज्ञः श्रेयोमार्गोपदेश्यपि ।
बुद्धो वन्द्यो न तु स्वप्नस्तादृगित्यज्ञचेष्टितम् ॥ ८५ ॥
यत्तु संवेदनाद्वैतं पुरुपाद्वैतवन्न तत् ।
सिद्धेत्स्वतोऽन्यतो वापि प्रमाणात्स्वेष्टहानितः ॥ ८६ ॥
सोऽर्हन्नेव मुनीन्द्राणां वन्द्य. समवतिष्ठते ।
तत्सद्भावे प्रमाणस्य निर्बाधस्य विनिश्चयात् ॥ ८७ ॥
ततोऽन्तरिततत्त्वानि प्रत्यक्षाण्यर्हतोऽञ्जसा ।
प्रमेयत्वाद्यथास्मादृक् प्रत्यक्षार्थाः सुनिश्चिताः ॥ ८८ ॥

हेतोर्न व्यभिचारोऽत्र दूरार्थैर्मन्दरादिभिः।
सूक्ष्मैर्वा परमाण्वाद्यैस्तेषां पक्षीकृतत्वत ॥ ८९ ॥
तत्त्वान्यन्तरितानीह देशकालस्वभावतः।
धर्म्मादीनि हि साध्यन्ते प्रत्यक्षाणि जिनेशिनः ॥ ९० ॥
न चास्मादृक्समक्षाणामेवमर्हत्समक्षता।
न सिध्येदिति मन्तव्यमविवादाद्द्वयोरपि ॥ ९१ ॥
न चासिद्धं प्रमेयत्वं कात्स्न्र्यतो भागतोऽपि वा।
सर्वथाप्यप्रमेयस्य पदार्थस्याव्यवस्थितेः ॥ ९२ ॥
यदि षड्भिः प्रमाणैः स्यात्सर्वज्ञः केन वार्य्यते।
इति ब्रुवन्नशेपार्थप्रमेयत्वमिहेच्छति ॥ ९३ ॥
चोदनातश्च निःशेपपदार्थज्ञानसम्भवे।
सिद्धमन्तरितार्थानां प्रमेयत्वं समक्षवत् ॥ ९४ ॥
यन्नार्हत· समक्षं तन्न प्रमेयं वहिर्गतः।
मिथ्यैकान्तो यथेत्येवं व्यतिरेकोऽपि निश्चितः ॥ ९५ ॥
सुनिश्चितान्वयाद्धेतो. प्रसिद्धव्यतिरेकत·।
ज्ञाताऽर्हन् विश्वतत्त्वानामेवं सिध्येदवाधित. ॥ ९६ ॥
प्रत्यक्षमपरिच्छिन्दन्त्रिकालं भुवनत्रयम्।
रहितं विश्वतत्त्वज्ञैर्न हि तद्बाधक भवेत् ॥ ९७ ॥
नानुमानोपमानार्थापत्त्यागमवलादपि।
विश्वज्ञाभावसंसिद्धिस्तेषां सद्विपयत्वतः ॥ ९८ ॥
नार्हन्नि.शेपतत्त्वज्ञो वक्तृत्वपुरुपत्वतः।
ब्रह्मादिवदिति प्रोक्तमनुमानं न बाधकम् ॥ ९९ ॥
हेतोरस्य विपक्षेण विरोधाभावनिश्चयात्।
वक्तृत्वादे· प्रकर्षेऽपि ज्ञानानिर्ह्रासससिद्धितः ॥ १०० ॥
नोपमानमशेपाणां नृणामनुपलम्भत·।
उपमानोपमेयानां तद्बाधकमसम्भवात् ॥ १०१ ॥

नार्थापत्तिरसर्वज्ञं जगत्साधयितुं क्षमा ।
क्षीणत्वादन्यथाभावाभावात्तत्तद्बाधिका ॥ १०२ ॥
नागमोऽपौरुषेयोऽस्ति सर्वज्ञाभावसाधन. ।
तस्य कार्य्ये प्रमाणत्वादन्यथानिष्टसिद्धितः ॥ १०३ ॥
पौरुषेयोऽप्यसर्वज्ञप्रणीतो नास्य बाधकः ।
तत्र तस्याप्रमाणत्वाद्धर्मादाविव तत्त्वतः ॥ १०४ ॥
अभावोऽपि प्रमाणं ते निषेध्याधारवेदने ।
निषेध्यस्मरणे च स्यान्नास्तिताज्ञानमञ्जसा ॥ १०५ ॥
न चाशेषजगज्ज्ञानं कुतश्चिदुपपद्यते ।
नापि सर्वज्ञसंवित्तिः पूर्वं तत्स्मरणं कुतः ॥ १०६ ॥
येनाशेषजगत्यस्य सर्वज्ञस्य निषेधनम् ।
परोपगमतस्तस्य निषेधे स्वेष्टबाधनम् ॥ १०७ ॥
मिथ्यैकान्तनिषेधस्तु युक्तोऽनेकान्तसिद्धितः ।
नासर्वज्ञजगत्सिद्धेः सर्वज्ञप्रतिषेधनम् ॥ १०८ ॥
एवं सिद्धः सुनिर्णीता सम्भवद्बाधकत्वतः ।
सुखवद्विश्वतत्त्वज्ञः सोऽर्हन्नेव भवानिह ॥ १०९ ॥
स कर्म्मभूभृतां भेत्ता तद्विपक्षप्रकर्षतः ।
यथा शीतस्य भेत्तेह कश्चिदुष्णप्रकर्षतः ॥ ११० ॥
तेषामागमिनां तावद्विपक्षः संवरो मतः ।
तपसा सञ्चितानान्तु निर्जरा कर्म्मभूभृताम् ॥ १११ ॥
तत्प्रकर्षः पुनः सिद्धः परमः परमात्मनि ।
तारतम्यविशेषस्य सिद्धेरुष्णप्रकर्षवत् ॥ ११२ ॥
कर्म्माणि द्विविधान्यत्र द्रव्यभावविकल्पतः ।
द्रव्यकर्म्माणि जीवस्य पुद्गलात्मान्यनेकधा ॥ ११३ ॥
भावकर्म्माणि चैतन्यविवर्त्तात्मानि भान्ति तु ।
क्रोधादीनि स्ववेद्यानि कथंचिच्चिद्भेदतः ॥ ११४ ॥

तत्स्कन्धराशयः प्रोक्ता भूभृतोऽत्र समाधितः ।
जीवाद्विश्लेपण भेद सन्तानात्यन्तसक्षय ॥ ११५ ॥
स्वात्मलाभस्ततो मोक्ष. कृत्स्नकर्म्मक्षयात्मन. ।
निर्जरासवराभ्यां तु. सर्वसद्वादिनामिह ॥ ११६ ॥
नास्तिकानान्तु नैवास्ति प्रमाण तन्निराकृतौ ।
प्रलापमात्रकं तेषां नावधेयं महात्मनाम् ॥ ११७ ॥
मार्गो मोक्षस्य वै सम्यग्दर्शनादित्रयात्मकः ।
विशेषेण प्रपत्तव्यो नान्यथा तद्विरोधतः ॥ ११८ ॥
प्रणेता मोक्षमार्गस्याबाध्यमानस्य सर्वथा ।
साक्षाद्य एव स ज्ञेयो विश्वतत्त्वज्ञताश्रय ॥ ११९ ॥
वीतनि.शेषदोषोऽत प्रवन्द्योऽर्हन् गुणाम्बुधिः ।
तद्गुणप्राप्तये सद्भिरिति संक्षेपतोऽन्वयः ॥ १२० ॥
मोहाक्रान्तान्न भवति गुरो मोक्षमार्गप्रणीति-
र्नर्ते तस्याः सकलकलुषध्वंसजा स्वात्मलब्धिः ।
तस्यै वन्द्यः परगुरुरिह क्षीणमोहस्त्वमर्हन्
साक्षात्कुर्वन्नमलकमिवाशेषतत्त्वानि नाथ ॥ १२१ ॥
न्यक्षेणाप्तपरीक्षाप्रतिपक्ष क्षपयितुं क्षमा साक्षात् ।
प्रेक्षावतामभीक्ष्ण विमोक्षलक्ष्मी. क्षणाय संलक्ष्या ॥ १२२ ॥
श्रीमत्तत्त्वार्थशास्त्राद्भुतसलिलनिधेरिद्धरत्नोद्भवस्य
प्रोत्थानारम्भकाले सकलमलभिदे शास्त्रकारैः कृतं यत् ।
स्तोत्रं तीर्थोपमानं प्रथितपृथुपथ स्वामिमीमांसित त-
द्विद्यानन्दै. स्वशक्त्या कथमपि कथितं सत्यवाक्यार्थसिद्ध्यै ॥१२३॥
इति तत्त्वार्थशास्त्रादौ मुनीन्द्रस्तोत्रगोचरा ।
प्रणीताप्तपरीक्षेय कुविवाद[1]निवृत्तये ॥ १२४ ॥

इत्याप्तपरीक्षा समाप्ता ।

---

१ "विवादविनिवृत्तये" इत्यपि पठन्ति ।

ॐ

# श्रीसमन्तभद्रस्वामिविरचिता

# आप्तमीमांसा ।

## श्रीवसुनन्दिसैद्धान्तिकविरचितया वृत्त्या सहिता ।

( ११ )



सार्वश्रीकुलभूषणं क्षतरिपुं सर्वार्थससाधनं
सन्नीतेरकलङ्कभावविधृतेः संस्कारकं सत्पथम् ।
निष्णातं नयसागरे यतिपतिं ज्ञानांशुसद्भास्करं
भेत्तारं वसुपालभावतमसो वन्दामहे बुद्धये ॥ १ ॥
लक्ष्मीभृत्परमं निरुक्तिनिरतं निर्वाणसौख्यप्रदं
कुज्ञानातपवारणाय विधृतं छत्रं यथा भासुरम् ।
सज्ज्ञानैर्नययुक्तिमौक्तिकफलैः सशोभमानं परं
वन्दे तद्धतकालदोषममलं सामन्तभद्रं मतम् ॥ २ ॥

समीचीनासमीचीनोपदेशविशेषप्रतिपत्तये सकलदोषातीतानन्तचतुष्टयसमेतप्रकटिताशेषद्रव्यपर्यायसामान्यविशेषपरमात्मपरीक्षाभिधायकमसंख्यातगुणश्रेणिकर्मनिर्जरणोपायं निराकृतसामान्यान्यापोहशब्दार्थगृहीतविद्वन्मनःसन्तोषकरं परमार्थभूतवाच्यवाचकसम्बन्धमनेकसूक्ष्मार्थप्रतिपादनचटुलं निःश्रेयसाभ्युदयसुखफलं स्वभक्तिसम्भारप्रेक्षापूर्वकारित्वलक्षणप्रयोजनवद्गुणस्तवं कर्तुकामः श्रीमत्समन्तभद्राचार्यः सर्वज्ञं प्रत्यक्षीकृत्यैवमाचष्टे—हे भट्टारक संस्तवो नाम माहात्म्यस्याधिक्यकथनं । त्वदीयं च माहात्म्यमतीन्द्रियं मम प्रत्यक्षागोचरं । अतः कथं मया स्तूयसे ? ॥ अत आह भगवान् । ननु भो वत्स यथाऽन्ये देवागमादिहेतोर्मम माहात्म्यमवबुध्य स्तवं कुर्वन्ति तथा त्वं किमिति न कुरुषे ? ॥ अत आह,—अस्माद्धेतोर्न महान् भवान् मां प्रति । व्यभिचारित्वादस्य हेतोः । इति व्यभिचारं दर्शयति—

देवागमनभोयानचामरादिविभूतयः ।
मायाविष्वपि दृश्यन्ते नातस्त्वमसि नो महान् ॥ १ ॥

वृत्तिः—देवास्त्रिदशास्तेषा स्वर्गावतरणजन्मनिष्क्रमणकेवलज्ञानोत्पत्तिमुक्तिगमनस्थानेषु आगमन आगम अवतार. देवागम । नभसि गगने हेममयाम्भोजोपरि यान नभोयानम् । चामरादीनि चतु षष्टिचामराणि । आदिशब्देन अशोकवृक्षसुरदुन्दुभिर्सिंहासनादीनि परिगृह्यन्ते । एतेषा द्वन्द्व । विभूतय. । मायाविष्वपि इन्द्रजालेष्वपि दृश्यन्ते । न अत. न अस्मात् । त्वमसि त्व भवसि । न अस्माक महान् गुरु. ॥ किमुक्तं भवति । देवागमादिहेतोर्नास्माक भवान्गुरुर्भवति। यतो देवागमादय. पूरणादिष्वपि दृश्यन्ते॥ अनैकान्तिको हेतु ॥ १ ॥

अथ मतम् । अय तर्हि हेतुर्वहिरन्तरङ्गलक्षणो महोदयः पूरणादिष्वसम्भवी इत्ययमपि व्यभिचारी । तथैव प्रतिपादयति—

**अध्यात्मं बहिरप्येष विग्रहादिमहोदयः ।**
**दिव्यः सत्यो दिवौकस्स्वप्यस्ति रागादिमत्सु सः ॥ २ ॥**

वृत्तिः—आत्मनि अधि अध्यात्म । सः अन्त । क्षुत्पिपासाजरारुजापमृत्य्वाद्यभाव इत्यर्थ ॥ बहिरपि बाह्योऽपि । एषः प्रत्यक्षनिर्देश. । विग्रहो दिव्यशरीरमादिर्येषा तान्येव वा महोदय. । विभूते. पूर्वावस्थाया अतिरेकोऽतिशयो वा विग्रहादिमहोदय अमानुषातिशय इत्यर्थ ॥ दिवि भवो दिव्य । सत्य· अवितथ. मायास्वरूपो न भवति । दिवि ओकः अवस्थान येषा ते दिवोकस. नाकसदना. तेष्वपि दिवौकस्स्वपि । अथवा दिवशब्दः अदन्तेनेष्टव्य ॥ रागो लोभमायेत्यादिर्येषा द्वेषादीना ते रागादय ते सन्ति येषा ते रागादिमन्त , तेषु रागादिमत्सु अक्षीणकषायेष्वित्यर्थ । स. महोदय इति । अय महोदयो यद्यपि समासेऽन्तर्भूतस्तथापि अध्यात्ममहोदय इति सम्बन्ध. कर्त्तव्य अन्यस्य श्रुतत्वात् । अथवा बहिर्विग्रहादिमहोदय अध्यात्म च ॥ किमुक्त भवति । योऽपि विग्रहादिमहोदयो मायाविष्वसम्भवी हेतुत्वेनोपन्यस्त सोऽपि व्यभिचारी । स्वर्गिषु सम्भवात् ॥ २ ॥

द्वयोर्हेत्वोरनैकान्तिकत्व प्रदर्श्य अन्यैर्यस्तीर्थकृत्त्वेनोपन्यस्तस्तस्य हेतोरसाधकत्व सर्वासर्वज्ञत्व प्रदर्शयन्नाह—

**तीर्थंकृत्समयानां च परस्परविरोधतः ।**
**सर्वेपामाप्तता नास्ति कश्चिदेव भवेद्गुरुः ॥ ३ ॥**

वृत्तिः—तीर्थं ससारनिस्तरणोपाय करोतीति तीर्थकृत् । यतस्तीर्थकृत् भवान् अतः सर्वज्ञः । इत्ययमपि हेतुरनैकान्तिकः सुगतादिपु दर्शनात् इत्यनुक्तोऽपि द्रष्टव्यः । अस्मिन्नवसरे वैनयिकः प्राह—इष्टमस्माक मर्वेषा सर्वज्ञत्वम् । अत आह—समयाना च परस्परविरोधतः अन्योऽन्यविसवादात्सर्वेषामाप्तता नास्ति विश्वेपा सर्वज्ञत्व न भवति ॥ अथवा तीर्थकरत्वात्सर्वज्ञो न भवति, सुगतादिपु दर्शनात् । अत सर्वे सर्वज्ञा. सन्तु इत्येतत्सर्वमुक्त्वा पश्चादिद वक्तव्य सर्वेषामाप्तता नास्ति । कुत । यतस्तीर्थकृता तत्समयाना च परस्परविरोधात् स्वरूपपदार्थविवाददर्शनात् ॥ अत्रावसरे सर्वज्ञाभाववादी प्राह—सत्य युक्तमेव न कश्चित् सर्वदर्शी इति । अत आह—कश्चिदेव कोऽप्येव तेषा मध्ये भवेत् स्यात् गुरुः महान् स्वामी ॥ किमुक्त स्यात् । न सर्वेषामाप्तता परस्परविरोधात्समयानामागमानाम् । एकोऽपि न भवति प्रमाणाभावात् । अत. केनचिदेव भवितव्यम् । एवमत्यन्ताभावाभावः कृतः । यदि परस्परविरोधात्सर्वज्ञभावो न भवति तर्हि येषा सर्वज्ञविच्छेदकः सम्प्रदायस्तेपामाप्तता स्यात् अत आह—तीर्थकृदित्यादि । तीर्थं सर्वज्ञ कृन्तन्ति छिन्दन्ति इति तीर्थकृत· समया आम्नायाः सम्प्रदाया येषा ते तीर्थकृत्समयास्तेषा अन्योऽन्यविरोधात् । सर्वं निरवशेष अवगत अगम्यावगमन वा इच्छन्ति अभ्युपगच्छन्ति इति सर्वेषा । तेषा सर्वेषा आप्तता परमार्थवादित्व नास्ति न विद्यते । कुत क आत्मजीवः चित् चेतनः न भवत्येव । एवकारः अवधारणार्थः ॥ भव ससार यान्ति गच्छन्ति इति भवेतः तेषा भवेता शक्रचक्रधरादीनामित्यर्थः । गुरुर्नाथः । भवेद्गुरुः भवेता. गुरु । न च लब्धात्मस्वरूपाणा ॥ किमुक्त भवति—तीर्थकृच्छेदकाम्नायानामपि सर्वमेकेन प्रमाणेन षड्भि. ( र्वा ) अभ्युपगच्छता आप्तता नास्ति परस्परविरोधात । अतो यनिपतिरेव स्यान्नान्य. ॥ ३ ॥

पूर्वकारिकोपात्तमर्थं समर्थयन्सुपुष्कलहेतुमाह—

**दोषावरणयोर्हानिर्निःशेषाऽस्त्यतिशायनात्।**
**क्वचिद्यथा स्वहेतुभ्यो बहिरन्तर्मलक्षयः॥ ४॥**

वृत्ति—दोष अज्ञानादि, कार्यरूप। आवरण कारणभूत कर्म। अथवा मोहान्तराया दोषा। ज्ञानदर्शनावरणे आवरण। तयोर्हानिर्विनाशो विश्लेषो दोषावरणयोर्हानिः। सिद्धसाधनतानिराकरणार्थं नि शेषा समस्ता समूलतलप्रहाणि इत्युक्त। अस्ति भवति। अतिशायनात् प्रकृष्यमाणाज्ञानहानेः पूर्वावस्थातिरेकात्। कचित् कस्मिंश्चित्पुरुषविशेषे। यथा शब्द. दृष्टान्तप्रदर्शनफल। स्वस्य आत्मनो हेतवः कारणानि ते तथाभूतास्तेभ्य· स्वहेतुभ्य। बहि किट्टकादिक अभ्यन्तर कालिमादि तच्च तन्मल च तस्य क्षयो विगम विश्लेष. बहिरन्तर्मलक्षय॥ एतदुक्त भवति। कस्मिंश्चिदतिशायनाद्दोषावरणयोर्हानिरस्ति। यथा धातुपाषाणस्य अन्तर्मलक्षय। स कश्चिद्भवत्येव गुरुरिति सम्बन्ध॥ एकत्र स्वहेतव सम्यग्दर्शनादय। अन्यत्र पिण्डीबन्धनप्रयोगादय। तथा एकत्र बहिर्मल शरीरेन्द्रियादिक। अन्तर्मल कर्म। अन्यत्र बहिर्मल. किट्टकादिक। अन्तर्मल कालिमादि॥

ननु विध्वस्तदोषोऽप्यात्मा कथ विप्रकर्षिणमर्थं प्रत्यक्षीकुर्यात्?। (इति शङ्कायां) साधनान्तरस्य बाधकाभावस्य भावनिरूपणमाह—

**सूक्ष्मान्तरितदूरार्थाः प्रत्यक्षा कस्यचिद्यथा।**
**अनुमेयत्वतोऽग्न्यादिरिति सर्वज्ञसंस्थिति.॥ ५॥**

वृत्तिः—सूक्ष्मा· स्वभावविप्रकृष्टाः। अन्तरिता कालविप्रकृष्टा। दूरा. देशविप्रकृष्टा। ते च ते अर्थाश्च सूक्ष्मान्तरितदूरार्था। तथा च स्वभावविप्रकृष्टा मन्त्रौषधिशक्तिचित्तादय। कालविप्रकृष्टा लाभालाभसुखदु ख-ग्रहेण रागादय। देशविप्रकृष्टा मुष्टिस्थादिद्रव्यम्। दूरा हिमवन्मन्दरमकराकरादय। प्रत्यक्षा. अध्यक्षा प्रत्यक्षज्ञानगोचरा कस्यचित्। सामान्यकथनमेतत। अनिर्दिष्टनामधेयस्य। यथा दृष्टान्तप्रदर्शक। अनुमेया अनुमानगम्या। अथवा अनुगत मेय मान येषा ते अनुमेयाः प्रमेया इत्यर्थ.

विसंवादिवचनं । यतः अविरोधोऽपि तव मतं न बाध्यते प्रसिद्धेन यस्मात् ।

ननु भो वत्स मदीयं मतं न बाध्यते अन्येषां किं बाध्यते ? अत आह—

**त्वन्मतामृतबाह्यानां सर्वथैकान्तवादिनाम् ।**
**आप्ताभिमानदग्धानां स्वेष्टं दृष्टेन बाध्यते ॥ ७ ॥**

वृत्तिः—त्वद्युष्मन्मतमेव आगम एव अमृतं सर्वात्मप्रदेशसुखकारणं दुःखनिवृत्तिलक्षणस्य परमानन्दमुक्तिसुखस्य निमित्तं वा मतं अमृतं तस्माद्बाह्या बहिर्भूता मिथ्यादृष्टयः. त्वन्मतामृतबाह्याः तेषां त्वन्मतामृतबाह्यानां युष्मदागमद्विषतां । सर्वथा सर्वप्रकारैः स्वरूपपररूपविधिप्रतिषेधात्मकैः. एकान्तं एकं धर्मं नित्यत्वादिकमेव वदितुं शीलं येषां ते सर्वथैकान्तवादिनः. तेषां सर्वथैकान्तवादिनां एकस्वभावाभ्युपगच्छताम् । आप्ताः सर्वज्ञाः. इति अभिमानः. गर्वः अहङ्कारः तेन दग्धाः भस्मसात्कृताः. प्रलयं नीताः तेषां आप्ताभिमानदग्धानाम् । स्वस्य आत्मनः इष्टं मतं स्वेष्टं आत्माभ्युपगतं प्रमाणफलं सर्ववस्तु । दृष्टेन प्रत्यक्षेण प्रत्यक्षप्रमितेन अनेकान्तात्मवस्तुना वा । बाध्यते विरोधमुपनीयते अन्यथा क्रियत इत्यर्थः ॥ किमुक्तं भवति ॥ भवदागमबाह्या आप्ताभिमानदग्धाः सर्वथैकान्तवादिनः तेषां स्वेष्टं दृष्टेन बाध्यते । धर्मकीर्त्तिमतनिरासार्थं अन्वयव्यतिरेकावुक्तवानाचार्यः ॥ द्रव्यार्थिकपर्यायार्थिकानुग्रहार्थं वा ॥

परवादिस्वेष्टस्य दृष्टेन बाधं प्रदर्श्य इदानीं स्वेष्टेन स्वेष्टस्य बाधां दर्शयितुमाह—

**कुशलाकुशलं कर्म परलोकश्च न क्वचित् ।**
**एकान्तग्रहरक्तेषु नाथ स्वपरवैरिषु ॥ ८ ॥**

वृत्तिः—कुशलं सुखनिमित्तं, अकुशलं दुःखहेतुकं, कर्म मिथ्यात्वासंयमकषाययोगकारणसञ्चितपुद्गलप्रचयः । कुशलं चाकुशलं च कुशलाकुशलं कर्म शुभाशुभमित्यर्थः । परलोको भवान्तरगतिरन्यजन्म । चशब्दोऽनुक्तसमुच्चयार्थः । तेन तत्फलबन्धमोक्षेहलोकादयो गृह्यन्ते । न

शब्दः प्रतिषेधार्थः । क्वचित् केषुचित् । एक अन्तो धर्मः एकान्तः तस्य ग्रहणमभ्युपगमो ग्रहः. एकान्तग्रहः तस्मिन् तेन वा रक्ता रञ्जिता. प्रविष्टा भक्ता एकान्तग्रहरक्ता. । अथवा ग्रह इव ग्रहः तेन व्याकुलिताः तेषु एकान्तग्रहरक्तेषु । नाथ स्वामिन् श्रद्धावचनमेतत् । स्वश्चात्मा च परे चान्ये च स्वपरे तेषां वैरिण शत्रव. तेषु स्वपरवैरिषु । किमुक्तं भवति?—हे नाथ अर्हन् एकान्तग्रहरक्तेषु स्वपरवैरिषु केषुचिदपि शुभाशुभ कर्म नास्ति । परलोकादयश्च न सन्ति । एकान्ततत्त्वग्रहणात् । यद्यपि पक्षान्तर्भूतो हेतुस्तथापि पृथग्द्रष्टव्य. । अन्तर्व्याप्तिसंग्रहात् । न केवलमेकान्तवादे कुशलाकुशलादिकं कर्म न घटते किं तु प्रमाणप्रमेयपक्षविपक्षहेतुहेत्वाभासदूषणदूषणाभासादिकमपि सर्वथार्थक्रियायोगात् ॥

सामान्येनैकान्तवादमभ्युपगतस्य वाच्यं प्रदर्श्येदानीं दूषयितुमना. स्वल्पोऽपि शत्रुर्नोपेक्षणीय इति न्यायमनुसरन्प्रथमतरं तावद्भावैकान्तं भस्मसात्कर्तुमाह—

**भावैकान्ते पदार्थानामभावानामपह्नवात् ।**
**सर्वात्मकमनाद्यन्तमस्वरूपमतावकम् ॥ ९ ॥**

वृत्तिः—भाव एवेति सत्त्वेवेति एकान्तः असहायधर्मग्रहो भावैकान्तः । सर्वथा सत्त्वाभ्युपगम इत्यर्थ. । तस्मिन्भावैकान्ते ॥ पदार्थानां पञ्चविंशतितत्त्वानां चेतनाचेतनदेवमनुजपशुनारकस्तम्भकुम्भाम्भःप्रभृतीनां वा अभावानां वस्तुधर्माणां हेत्वङ्गानां विशेषणमित्यर्थः । बहुवचनाच्चत्वारोऽपि परिगृह्यन्ते । अपह्नवान्निराकरणादित्यर्थः ॥ किं स्यात्सर्वं निरवशेषमात्मा स्वरूपं यस्य तत्सर्वात्मकं विश्वमेकस्वरूपमित्यर्थ. ॥ आदिरुत्पत्तिः पूर्वस्मिन्नसत्त्वमन्तोऽवसानं विनाशो वा आदिश्चान्तश्चाद्यन्तौ तौ न विद्येते यस्य तदनाद्यन्तमनाद्यनन्तमित्यर्थः ॥ स्वमात्मीयं रूपमाकार. स्वं आत्मैव वा रूपं स्वरूपं न विद्यते तद्यस्य तदस्वरूपं । अभाव इत्यर्थः । तवेदं तावकं न तावकमतावकं ॥ किमुक्तं भवति—पदार्थानां भावैकान्ताभ्युपगमे अतावकं सर्वाद्यात्मकमनाद्यनन्तमस्वरूपं स्यात् कस्मात्सर्वाभावापह्नवात् ॥

अथ मत केऽभावा , कियन्तो वा, कान्यनाद्यनन्तानि ? कस्माद्भावात् किं स्यादत आह.—

**कार्यद्रव्यमनादि स्यात्प्रागभावस्य निह्नवे ।**
**प्रध्वसस्य च धर्मस्य प्रच्यवेऽनन्ततां व्रजेत् ॥ १० ॥**

वृत्ति—कार्यं च द्रव्य च कार्यद्रव्य वस्त्वन्यथाभाव॰ । घटादिक्रियत इति कार्यम् । अवस्थान्तर द्रवति गच्छतीति द्रव्यम् । अनाद्यनन्तसर्वकालैकस्वरूप नित्यमादिरहित स्याद्भवेत् । प्राक् पूर्वस्मिन्नभाव॰ असत्त्व प्रागभाव. । मृत्पिण्डे घटस्यासत्त्वमित्यर्थ । तस्य प्रागभावस्य निह्नवे विलोपे निराकरणे । प्रध्वसस्य च विनाशस्य च घटस्य कपालनाशादय इत्यर्थ । धर्मस्य विशेषस्य गुणस्य प्रच्यवे अभावे निराकरणे । अनन्तस्य भावोऽनन्तता तामनन्ततामपर्यवसान सर्वकालकार्यमिति सम्वन्धनीयम्। व्रजेत् गच्छेत्॥ किमुक्त भवति–प्रागभावस्य निह्नवो यदि स्यात्कार्यद्रव्यमनादि स्यात् । प्रध्वमाभावास्याभावस्य चाभावे तदेव कार्यद्रव्यमनन्तता व्रजेत् ॥

तृतीयचतुर्थाभावस्वरूप तदभावे च यद्भवति—

**सर्वात्मकं तदेकं स्यादन्यापोहव्यतिक्रमे ।**
**अन्यत्र समवायेन व्यपदिश्येत सर्वथा ॥ ११ ॥**

वृत्तिः—सर्वो निरवशेष आत्मा स्वरूप यस्य तत् सर्वात्मकम् । तत् किञ्चिद्वस्तु विवक्षितरूपम् । एक अभेदरूप स्यात भवेत् । अन्यस्य अपरस्य अपोहो निराकरण तस्य व्यतिक्रम॰ निह्नव. निराकृति स तथाभूत तस्मिन्नन्यापोहव्यतिक्रमे इतरेतराभावाभावे इत्यर्थ । अन्यत्र अत्यन्ताभावाभावे । समवायेन मीलनेन समुदायेन । व्यपदिश्येत कथ्येत अभ्युपगम्येत । सर्वथा सर्वप्रकारै । खरविषाणादि ॥ अथानयोरभावयो. को विशेष इति चेत्–घटे पटाभाव इतरेतराभाव । कदाचित्कालान्तरे तेन स्वरूपेण विद्यमानत्वात् । अत्यन्ताभाव पुनर्जीवत्वेन पुद्गलस्याभाव कदाचिदपि तेन स्वरूपेण न भवति ॥ एतदुक्त भवति–अन्यापोहव्यतिक्रमे सति, किञ्चिद्वि-

वक्षितं सर्वात्मकमेकं भवति । अत्यन्ताभावाभावे पुनरैक्येन सर्वप्रकारैर्व्यप-दिश्येत । ततो न किंचित्स्यात् ॥

भावैकान्तपक्षे कुशलाकुशलकर्मादेरघटना प्रदर्श्य अभावैकान्तपक्षेऽपि भृश न घटेतेति प्रदर्शयन्नाह—

**अभावैकान्तपक्षेऽपि भावापह्नववादिनाम् ।**
**बोधवाक्यं प्रमाणं न केन साधनदूषणम् ॥ १२ ॥**

वृत्तिः—अभाव इति असन्निति एकान्तो मिथ्याभिप्रायोऽभावैकान्तः । स एव पक्षोऽभ्युपगमस्तस्मिन्नप्यभावैकान्तपक्षेऽपि । न केवल भावैकान्ते, किं त्वभावैकान्तेऽपि भावस्य सत्त्वस्य अपह्नवः अभावो निराकरण तं वदितु शीलं येषा ते तथाभूतास्तेषा भावापह्नववादिनाम् । बोधो ज्ञान स्वार्थानुमानं, वाक्यं आगमः परार्थानुमानम् । बोधश्च वाक्यं च बोधवा-क्यम् । प्रमीयतेऽनेनेति प्रमाण स्वपरावभासकं ज्ञानम् । न प्रतिषेधवचनम् । केन कतरेण । साधन च दूषण च साधनदूषण द्वन्द्वैकवद्भावः । स्वपक्ष-सिद्धिः परपक्षनिराकरण । भावापह्नववादिनामभावैकान्ते बोधवाक्ययोरप्यभाव-स्ततः प्रमाणाभावात् केन साधन केन वा दूषण क्रियत इति सम्बन्ध. ॥

भावाभावैकान्ते विरोध निरूप्योभयैकान्तवादिनामपि न किंचित्सङ्गच्छत इत्याह—

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।**
**अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ १३ ॥**

वृत्तिः—विरोधाद्व्यभिचारात् पूर्वापरासङ्गतत्वात् । न प्रतिषेधवचनम् । एक आत्मा स्वभावो ययोस्तौ तथा तयोर्भावस्तदैकात्म्यम् । उभयोः सत्त्वा-सत्त्वयोरैकात्म्यमुभयैकात्म्य भावाभावैक्यमित्यर्थः । न्यायो युक्तिः प्रमाणेन प्रमेयस्य घटना । स्याद्वाद एव न्याय. स्याद्वादन्यायस्तस्मै विद्विषन्ति वा विद्विषन्तीति स्याद्वादन्यायविद्विषस्तेषा स्याद्वादन्यायविद्विषामनेकान्तवैरिणाम् । अथ भावाभावोभयैकान्तपक्षदोषदर्शनादवाच्यतैकान्त आश्रीयते तथापि दोष एवात आह । उच्यत इति वाच्य न वाच्यमवाच्यं तस्य भावोऽवाच्यता

सैव एकान्तो विधाध्यवसायोऽवाच्यतैकान्तस्तस्मिन्नवाच्यतैकान्ते । अपि शब्दार्थयोरवाच्यवाचकत्वेऽपि । उक्तिर्वचनमवाच्यमित्यवक्तव्यमिति । न युज्यते न घटते । स्याद्वादन्यायविद्विषा वादिनामुभयैकात्म्य न भवति । विरोधात् । विज्ञानशून्यवत् । तथावक्तव्यैकान्तपक्षेऽपि अवाच्यमित्येव या उक्ति साऽपि न युज्यते । सर्वथाऽवाच्यत्वात् । एकशब्देन घटपटादिवत् ॥

एकदेशतया यदि सर्वथा सदसदुभयावक्तव्यरूप तत्त्व नास्ति कथं तर्हीत्याह—

**कथञ्चित्ते सदेवेष्टं कथञ्चिदसदेव तत् ।**
**तथोभयमवाच्य च नययोगान्न सर्वथा ॥ १४ ॥**

वृत्तिः—कथञ्चित्केनचित्प्रकारेण । ते तव सदेव भाव एव । इष्ट मतमभ्युपेतम् । कथञ्चित्केनचित्प्रकारेण । असदेव अभाव एव । तत् यदेव सत् । तथा तेनैव केनचित्प्रकारेण । उभय सदसदात्मकम् । अवाच्यमवक्तव्यम् । चकारात्कथञ्चिदित्यर्थं । नयस्य वक्तुरभिप्रायस्य योगो युक्तिर्नययोगस्तस्मान्नययोगादभिप्रायवशादित्यर्थ । न सर्वथा सर्वप्रकारैर्न ॥ किमुक्त भवति—सदसदुभयावक्तव्य वस्तु न भवति । किन्तु केनचित्प्रकारेण ।

तदेव स्पष्टयति अनवस्था च निराकरोति उत्तरकारिकया—

**सदेव सर्वं को नेच्छेत् स्वरूपादिचतुष्टयात् ।**
**असदेव विपर्यासान्न चेन्न व्यवतिष्ठते ॥ १५ ॥**

वृत्ति—सदेव सत्त्वमेव सर्वं निरवशेष विश्वम् । को नेच्छेत्को न मन्यते कस्य नेष्ट ? किन्तु इष्टमेव सर्वस्य । स्वरूपमात्मरूप स्वस्य वा रूप तदादिर्यस्य तत्स्वरूपादि तच्चैतच्चतुष्टय चतुर्विकल्प तत्तथाभूत । तस्मात्स्वरूपादिचतुष्टयात् । किं तत् ? स्वद्रव्यस्वक्षेत्रस्वकालस्वभाव तस्मात् । असदेव नास्तित्वमेव विपर्यासादस्वरूपादिचतुष्टयात् । अस्वद्रव्यक्षेत्रकालभावात् । न चेद्यद्येव न व्यवतिष्ठते न घटते नात्मस्वरूप लभत इत्यर्थ । किमुक्त भवति—स्वरूपादिचतुष्टयात्सर्वं सदेव को नेच्छेत् ? । विपर्ययाद्विपर्यय को

नेच्छेत् ?। यदि पुनर्येनैव सत्त्व तेनैवासत्त्वमिति स्यान्न किञ्चिदपि स्यात् ॥
शेषभङ्गप्ररूपणार्थमाह—

**क्रमार्पितद्वयाद् द्वैतं सहावाच्यमशक्तितः ।**
**अवक्तव्योत्तराः शेषास्त्रयो भङ्गा स्वहेतुतः ॥ १६ ॥**

वृत्तिः—क्रमेण परिपाट्या अर्पित विवक्षित क्रमार्पित तच्च तद्वय द्वितय क्रमार्पितद्वय तस्मात्क्रमार्पितद्वयात् । द्वाभ्यामित द्वीत द्वीतमेव द्वैत द्वयात्मकमस्तित्वनास्तित्वस्वरूप क्रमविवक्षितस्वपरचतुष्टयादस्तित्वनास्तित्वरूपमित्यर्थः। सह युगपदेकहेलया विवक्षितस्वपरचतुष्टयादित्यर्थ । यद्यपि द्वयशब्द॰ समासान्तर्भूतस्तथापि तेन सम्बधोऽन्यस्याश्रुतत्वात् । अवाच्यमवक्तव्यमुच्चारयितुमशक्यमित्यर्थ.। कुतोऽशक्तितोऽसामर्थ्यात् । अवक्तव्यमवाच्यमुत्तर पर येषा भङ्गाना तेऽवक्तव्योत्तरा. शेषा अन्ये त्रयो भङ्गास्त्रयो विकल्पा. । स्वहेतुतः स्वकीयकारणात् । के ते स्वहेतव. स्वरूपादिचतुष्टयात्सहविवक्षितस्वरूपादिचतुष्टयाच्चास्ति चावक्तव्य तथा पररूपादिचतुष्टयाद्युगपद्दर्शितस्वपररूपादिचतुष्टयाच्च नास्ति चावाच्यम् । तथा क्रमार्पितस्वरूपादिचतुष्टयाद्युगपद्विवक्षितस्वपररूपादिचतुष्टयाच्चास्ति नास्ति चावक्तव्य च ॥ किमुक्त भवति ? स्वहेतो. १ स्यादस्ति । २ स्यान्नास्ति । ३ स्यादस्ति नास्ति च । ४ स्यादवक्तव्यम् । ५ स्यादस्ति चावक्तव्यम् । ६ स्यान्नास्ति चावक्तव्यम् । ७ स्यादस्ति नास्ति चावक्तव्य च वस्तुत इत्यर्थः ॥

अस्तित्वादीन् धर्मान् युक्तित. समर्थ्य, अधुना तेषामेकस्मिन्नधिकरणेऽवस्थानस्य विरोधमन्तरेण परस्परपरिहारेण रूपादीनामिव युक्तित समर्थनार्थमाह—

**अस्तित्वं प्रतिषेध्येनाविनाभाव्येकधर्मिणि ।**
**विशेषणत्वात्साधर्म्यं यथा भेदविवक्षया ॥ १७ ॥**

वृत्तिः—अस्तित्व प्रतिषेध्येन नास्तित्वेन अविनाभावि नास्तित्वेन विना न भवति पृथग्भूत नोपलभ्यत इत्यर्थः । धर्मा अस्य सन्ति धर्मी एकश्चासौ धर्मी च तस्मिन्नेकधर्मिणि । विशेषणत्वात् । उपाधिवशात् । समानो धर्म.

सधर्मस्तस्य भाव साधर्म्यमन्वय॰ । यथा दृष्टान्तप्रदर्शक॰ । भेदस्य विवक्षाऽर्पणा तया इत्यर्थ ॥ एकधर्मिणि शब्दादौ अस्तित्व नास्तित्वाविनाभावि कुतो विशेषणत्वात् । यथा कृतकत्वादौ साधर्म्यं वैधर्म्येण विना न भवति । यद्विशेषण तत्प्रतिषेध्याविनाभावि यथा साधर्म्यं व्यतिरेकविवक्षया । द्रुमादौ विशेषण चास्तित्व । तस्मात्प्रतिषेध्यधर्माविनाभावि ॥

तथा—

**नास्तित्व प्रतिषेध्येनाविनाभाव्येकधर्मिणि ।**
**विशेषणत्वाद्वैधर्म्यं यथाऽभेदविवक्षया ॥ १८ ॥**

वृत्ति.— नास्तित्व प्रतिषेध्येनाऽस्तित्वेनाविनाभावि विशेषणत्वात् । यथा वैधर्म्यमभेदविवक्षया ॥ यत्किञ्चित् विशेषण तत्सर्वमेव प्रतिपक्षधर्माविनाभावि यथा वैधर्म्यं साधर्म्यविवक्षया । हेतोर्विशेषण च नास्तित्वम् ॥

पुनरप्यविरोध दर्शयन्नाह—

**विधेयप्रतिषेध्यात्मा विशेष्यः शब्दगोचरः ।**
**साध्यधर्मो यथा हेतुरहेतुश्चाप्यपेक्षया ॥ १९ ॥**

वृत्तिः— विधेयशब्दवाच्य साध्य इत्यर्थ । प्रतिषेध्यो निराकरणीय । द्वन्द्व । तावात्मा स्वरूप यस्य स विधेयप्रतिषेध्यात्मा विशेष्यो धर्मी पक्ष इत्येकार्थ ॥ शब्दगोचर शब्दविषय । साध्यस्य धर्म साध्यधर्म । यथा दृष्टान्तप्रदर्शक । हेतु साधनमहेतुरसाधनम् । अपि सम्भावनायाम् । अपेक्षया विवक्षया ॥ विशेष्यो विधेयप्रतिषेध्यात्मा शब्दगोचरत्वात् । यथा साध्यधर्मो हेतुश्चाहेतुश्च भवति विवक्षया । अग्निमत्त्वे साध्ये धूमो हेतुर्भवति जलवत्त्वे साध्येऽहेतुरेकस्मिन्धर्मिणि । एवमत्रापि—यो य शब्दविषयः स सर्वोऽपि विधेयप्रतिषेध्यात्मा विशेष्य यथा । साध्यधर्मो हेतुरहेतुश्चापेक्षया । शब्दविषयश्च विशेष्य॰ तस्माद्विधेयप्रतिषेध्यात्मा ॥

शेषभङ्गान् समर्थयन्नाह—

**शेषभङ्गाश्च नेतव्या यथोक्तनययोगत. ।**
**न च कश्चिद्विरोधोऽस्ति मुनीन्द्र तव शासने ॥ २० ॥**

वृत्तिः— शेषभङ्गाश्च अवक्तव्यादयो नेतव्या ज्ञातव्या योजनीयाः ॥ यथोक्तश्चासौ नयश्च यथोक्तनय. तस्य योगस्तस्मात् विशेषणत्वादिति हेतोरित्यर्थ. । विरोधोऽपि न कश्चित् । उपलक्षणमेतत् । विरोध इति सशयविरोधवैयधिकरण्योभयदोषप्रसङ्गसङ्करावस्थाऽभावानाक्षिपति एते दोषा न सन्ति । कस्मादनेकान्तत्वाद्वस्तुन. ॥ जीवादिपदार्थयाथात्म्यमननान्मुनयस्तेषामिन्द्रो भगवान् केवली तस्य सम्बोधन हे मुनीन्द्र तव शासने युष्मन्मते अनभिलाप्यादयोऽपि धर्माः क्वचिदेकधर्मिणि प्रत्यनीकस्वाभावाविनाभाविनो विशेषणत्वात् पूर्वोक्तमुदाहरणम् ॥

अनेकान्तात्मक तत्त्व व्यवस्थाप्यैकान्त निराकर्तुमाह—

**एवं विधिनिषेधाभ्यामनवस्थितमर्थकृत् ।**
**नेति चेन्न यथाकार्यं बहिरन्तरुपाधिभिः ॥ २१ ॥**

वृत्तिः—एवमनेन प्रकारेण । विधिनिषेधाभ्यामस्तित्वनास्तित्वाभ्याम् । अनवस्थितमनवधारित यद्वस्तु तदर्थकारि भवति । नेति चेत् यथैव न भवति । न । यथाकार्यं यथाभूत कार्यमुपलभ्यते तस्य कारक न स्यात् ॥ बहिरन्तरुपाधिभिः वाह्याभ्यन्तरहेतुभि सहितैरपि । अथवा अनवस्थित शून्य अयथाकार्यम् ॥

अथ मत स्यादस्तीत्यनेनैव स्याच्छब्देन सर्वे भङ्गा गृहीताः । किमेतेषां प्रपञ्चोऽत आह—

**धर्मे धर्मेऽन्य एवार्थो धर्मिणोऽनन्तधर्मण· ।**
**अङ्गित्वेऽन्यतमान्तस्य शेषान्तानां तदङ्गता ॥ २२ ॥**

वृत्तिः—धर्मे धर्मे धर्मनिर्देशे । भङ्गे भङ्गे इति वा पाठान्तरम् । अन्य एवार्थोऽपूर्वार्थ. । कुतो धर्मिणो वस्तुनः । अनन्ता धर्मा. स्वभावा यस्य सोऽनन्तधर्मा तस्यानन्तधर्मण. । अङ्गित्वे प्रधानत्वे । अन्यतमान्तस्यास्तित्वादीना मध्ये एकतमस्य । शेषान्तानां परिशेषधर्माणा नास्तित्वादीनाम् । तत्तस्मात् । अङ्गता अप्रधानता । अथवा तदाङ्गता इति पाठान्तरम् । तदा

तस्मिन्काले । शेषाणामप्रधानता । अत॰ पुनरुक्तता नास्ति । अथवा सुनय-सप्तभङ्गीनिरूपणार्थमिय कारिका, सङ्क्षेपार्था चेयम् ॥

सप्तभङ्गीं योजयन्नाह—

**एकानेकविकल्पादावुत्तरत्राऽपि योजयेत् ।**
**प्रक्रियां भङ्गिनीमेना नयैर्नयविशारदः ॥ २३ ॥**

वृत्तिः—नयविशारदो नय प्रमाणपरिगृहीतार्थैकदेशे वस्त्वध्यवसायस्तस्मिन्कुशल. । नयै स्वहेतुभिर्विशेषणत्वादिभि. । एना प्रक्रियाम् । भङ्गिनी भङ्गवतीं भङ्गबहुलाम् । उत्तरत्रापि इह ऊर्ध्वमपि । योजयेदुद्घाटयेत् ॥ क एकश्च अनेकश्च तावेव विकल्पौ तावादिर्यस्य तस्मिन्नेकानेकविकल्पादौ । कथ स्यादेक । स्यादनेक । स्यादेकश्चानेकश्च स्यादवक्तव्य । स्यादेकश्चावक्तव्य । स्यादनेकश्चावक्तव्यश्च । स्यादेकश्चानेकश्चावक्तव्यश्च । एवमनेन द्वैताद्वैतादिषु योज्यम् ॥

सदाद्येकान्तेषु दोषमुद्भाव्यैवमद्वैतैकान्त दूषयितुमाह॰—

**अद्वैतैकान्तपक्षेऽपि दृष्टो भेदो विरुध्यते ।**
**कारकाणां क्रियायाश्च नैकं स्वस्मात्प्रजायते ॥ २४ ॥**

वृत्तिः—अद्वैतमेवेत्येकान्तोऽसद्ग्रह स एव पक्षो जिज्ञासितविशेषो धर्मी तस्मिन्नपि दृष्टो भेद प्रत्यक्षप्रमाणपरिच्छिन्न नानात्व लोकप्रसिद्ध वा । विरुध्यते मिथ्या भवेत् । कारकाणि कर्त्रादीनि क्रिया आकुञ्चनादिका पाकादिका वा एतेषा परस्परेणेय क्रिया इमानि कारकाणि "इद कर्तृकारकमिद कर्मेत्यादि । इय दहनक्रिया इय पचनक्रियेत्यादि । चशब्दादिद प्रमाणमिद परिच्छेद्य वस्तु" इति भेदो न स्यात् । कुत । नेति एकान्तप्रतिषेधवचनम् । एकमसहायम् स्वस्मादात्मन । प्रजायत उत्पद्यते ॥

तथैवमपि—

**कर्मद्वैत फलद्वैतं लोकद्वैतं च नो भवेत् ।**
**विद्याऽविद्याद्वयं न स्यात् बन्धमोक्षद्वयं तथा ॥ २५ ॥**

वृत्तिः—शुभकर्माशुभकर्मेति द्वय न स्यात् । पुण्यमिद पापमिद इह-

लोक परलोको ज्ञानमज्ञान बन्धो मोक्षश्च जीवप्रदेशकर्मप्रदेशान्योन्याश्लेषो वन्ध. अष्टविधकर्ममोक्षो मोक्ष इत्येवमादि न स्यात् ॥

प्रमाणादद्वैत निराकर्तुमाह—

**हेतोरद्वैतसिद्धिश्चेद्द्वैतं स्याद्धेतुसाध्ययोः ।**
**हेतुना चेद्विना सिद्धिर्द्वैतं वाङ्मात्रतो न किम् ॥ २६ ॥**

वृत्तिः—अद्वैतस्य सिद्धिः किं हेतोराहोस्विद्वचनमात्रात्? यदि हेतोरिद साधनमिद साध्यमिनि द्वैत स्यात् ॥ साधनमन्तरेणाद्वैतस्य सिद्धिश्चेदेव वचनमात्राद्वैत कस्मान्न स्यादिति समानम् ॥

पुनरप्यद्वैत निराकर्तुमाह—

**अद्वैतं न विना द्वैतादहेतुरिव हेतुना ।**
**सञ्ज्ञिनः प्रतिपेधो न प्रतिषेध्यादृते क्वचित् ॥ २७ ॥**

वृत्तिः—द्वैताद्विना न भवत्यद्वैत । यथा अहेतुर्हेतुमन्तरेण न भवति ॥ सज्ञिनो नामवतः प्रतिपेध्यमन्तरेण प्रतिपेधो यस्मात् क्वचिदपि न भवति ॥ यो य सज्ञी तस्य तस्य प्रतिपेध्यमन्तरेण प्रतिपेधो न भवति । यथा कुसुममन्तरेणाकाशादौ कुसुमस्य । सज्ञि चाद्वैत तस्माद्वैतेन विना प्रतिपेधो न भवति ॥

अधुना सर्वथासर्वपदार्थपृथक्त्वैकान्तवादिवैशेपिकादिमतकदर्थनार्थमाह—

**पृथक्त्वैकान्तपक्षेऽपि पृथक्त्वादपृथक्कृतौ ।**
**पृथक्त्वे न पृथक्त्वं स्यादनेकस्थो ह्यसौ गुणः ॥ २८ ॥**

वृत्तिः—यद्यप्यद्वैतैकान्तपक्षे दोपचयात् पृथक्त्वमित्येकान्तपक्षोऽभ्युपगम्यते तथापि पृथग्गुणात्तावदपृथग्भूतावभ्युपगन्तव्यौ गुणगुण्यादी । अन्यथा तस्मादपि यदि तौ पृथक् भिन्नो स्याता तदानी पृथक्त्वादिर्गुणो न स्यात् । कुत. । यतोऽनेकस्थो ह्यसौ गुणो दृष्ट इत्यर्थः ॥ न च तयो पृथक्त्वगुणः पृथग्गति. सर्वेपामभाव. स्यात् । तस्मात् भेदपक्षोऽपि न श्रेयान् ॥

इदानीं पृथक्त्वैकान्तवादिविशेपमायासु क्षणिकत्वैकान्तकदर्थनार्थमाह—

अत आह । सामान्य विकल्पेनेष्टोऽर्थो वाच्यो यासा ता· सामान्यार्था । गिरो वाच. अन्येषां मिथ्यादृशा । यतस्ताभिविशेषो याथात्म्य स्वलक्षण नाभिलप्यते यद्येव सामान्य तेषामवस्तु अतस्तस्याभावात्सकला समस्ता गिरो वचनानि मृषैवासत्यरूपा एव अतो न वाच्यम् नापि वाचकोऽनुमानाभाव. ( ? )

उभयैकान्त निराकर्तुकामः प्राह—

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।**
**अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ३२ ॥**

वृत्तिः—अथ मत यद्येकैके दोष उभयैकात्म्यमेपितव्यमिति दूषणमाह । एकत्वपृथक्त्वपरप्रत्यनीकस्वभावद्वयसम्भवोऽपि न सम्भवति अस्तित्वनास्तित्ववत् प्रतिषेधात् । एकेनैकस्य निराकृतत्वात् ॥ अथावाच्यमिष्यते तदपि न । अवाच्यत्वे येयमुक्ति. साऽपि न सम्भवति मिथ्यादृशाम् ॥

सामान्यविशेषौ परस्परानपेक्षावन्याभ्युपगतौ निरस्य तौ सापेक्षौ सन्तावर्थक्रिया कुरुत इत्यस्यार्थस्य प्रतिपादनार्थमाह—

**अनपेक्षे पृथक्त्वैक्ये ह्यवस्तुद्वयहेतुतः ।**
**तदेवैक्यं पृथक्त्वं च स्वभेदैः साधनं यथा ॥ ३३ ॥**

वृत्तिः—परस्परानपेक्षे पृथक्त्वैक्ये सामान्यविशेषाववस्तु अर्थक्रियाकारि न भवति द्वयहेतोर्द्वाभ्या । कथ यद्यद्विशेषशून्य तत्तन्नास्ति यथा खरविषाण सामान्यं च तथा परपरिकल्पित । तस्मान्नास्ति विशेष. सामान्यशून्यत्वात् । खरविषाणविशेषवदित्यनेन हेतुद्वयेन सामान्यविशेषयोरवस्तुत्व साधनीयम् । तदेव वस्तु । ऐक्य सामान्य विशेषश्च पृथक्त्व च द्वयात्मक कुतोऽविरोधात् । यथा साधनहेतुज्ञान वाक्य वा स्वभेदैः स्वधर्मै· पक्षधर्मान्वयव्यतिरेकादिभिर्भिन्नमेक भवति ॥

ननु तदेवैक्य पृथक्त्व च कथ यावता विरुद्धमेतत्,—

**सत्सामान्यात्तु सर्वैक्यं पृथक् द्रव्यादिभेदतः ।**
**भेदाभेदविवक्षायामसाधारणहेतुवत् ॥ ३४ ॥**

वृत्तिः—सतोऽस्तित्वस्य सामान्य यत्तत्तथा तस्माच्च सर्वस्यैक्यमेव। द्रव्यादिभेदैर्द्रव्यपर्यायगुणादिभेदैरथवा द्रव्यक्षेत्रकालभावैर्भिन्न पृथक्त्वादेव। भेदश्चाभेदश्च तयोर्विवक्षाया क्रियमाणायामसाधारणहेतु श्रावणत्वप्राणादिमत्वादिस्तद्वत्॥ यद्यप्यत्रान्वयो नास्ति तथाप्यन्यथानुपपत्तिबलेन सिद्धमिति॥

केषाचिद्विद्यमानस्याविवक्षाऽविद्यमानस्यैव विवक्षा, अन्येषा वैयाकरणाना विद्यमानस्यैव विवक्षा नाविद्यमानस्य, अन्येषा विवक्षा नास्तीत्येतन्मतनिराकरणायाह—

**विवक्षा चाविवक्षा च विशेष्येऽनन्तधर्मिणि।**
**सतो विशेषणस्यात्र नासतस्तैस्तदर्थिभिः॥ ३५॥**

वृत्तिः—सतो विद्यमानस्य विशेषणस्यास्तित्वादेर्विवक्षा चाविवक्षा च। नासतो नाविद्यमानस्य क्रियते। कैस्तदर्थिभिर्विवक्षाप्रयोजनवद्भिः। अनेकस्मिन्। कुतो लोकप्रसिद्धमेतत्॥

कस्यचिद्भेद सवृतिकल्पितोऽन्यस्याभेद' सवृतिकल्पित इत्येनां दुरागमवासनाजनिता विप्रतिपत्ति निराकर्तुमाह—

**प्रमाणगोचरौ सन्तौ भेदाभेदौ न संवृती।**
**तावेकत्राविरुद्धौ ते गुणमुख्यविवक्षया॥ ३६॥**

वृत्तिः—भेदाभेदौ प्रमाणगोचरौ प्रमाणविषयौ सन्तौ भवन्तौ सवृतिरूपावपरमार्थौ न प्रमाणविषयत्वात्॥ अतस्तवागमे तावेकत्रैकस्मिन् धर्मिणि न विरुद्धौ। गुणविवक्षया अप्रधानविवक्षया। मुख्यविवक्षया प्रधानविवक्षया। दृश्यते च लोके प्रधानाप्रधानविवक्षा। यथाऽनुदरा कन्येत्यादि॥

नित्यत्वैकान्त निराकर्तुकाम आह—

**नित्यत्वैकान्तपक्षेऽपि विक्रिया नोपपद्यते।**
**प्रागेव कारकाभावः क्व प्रमाण क्व तत्फलम्॥ ३७॥**

वृत्तिः—उक्तपक्षदोषभयान्नित्यत्वैकान्तपक्ष आश्रीयते तत्रापि सतो भावस्यान्तरावाप्तिविक्रिया सा नोपपद्यते न घटत इत्यर्थ। अत एव कारणात् कारकाणि कर्त्रादीनि तेषामभाव शून्यता। प्रागेव पूर्वमेव। तस्मिन्नभावे

कारकविशेषप्रमाणवस्तुयाथात्म्यप्रतिपादक क तस्मिन् किंतु न क्वचिदपि । तदभावे क्व प्रमाणफलमुपेक्षाहानोपानादिकम् ? ॥

माभूद्विक्रिया व्यङ्ग्यव्यञ्जकभावो भविष्यत्यत आह—

**प्रमाणकारकैर्व्यक्तं व्यक्तं चेदिन्द्रियार्थवत्।**
**ते च नित्ये विकार्यं किं साधोस्ते शासनाद्बहिः ॥ ३८ ॥**

वृत्तिः—प्रमाणानि प्रत्यक्षादीनि । कर्तृकर्मकरणसंप्रदानापादानाधिकरणानि कारकाणि तैर्व्यक्त प्रकाशित व्यञ्जित कृत व्यक्त महदादि । यथेन्द्रियैश्चक्षुरादिभिरर्थो विषय· । चेद्यद्येव । ते च व्यङ्ग्यव्यञ्जके नित्ये अविचलितैकरूपे । किं विकार्यं यावता हि विकारो यो वस्तुन्यन्यथाभावो व्यक्तिरप्यन्यथाभावः । अव्यक्ताद्व्यक्तमन्यत् । तव शासने पुन. सर्वं सुघटम् ॥

पुनरपि कदर्थयितुमाह—

**यदि सत्सर्वथा कार्यं पुंवन्नोत्पत्तुमर्हति ।**
**परिणामप्रक्लृप्तिश्च नित्यत्वैकान्तबाधिनी ॥ ३९ ॥**

वृत्तिः—असत्किञ्चिदपि नोपपद्यते सर्वं सर्वत्र सर्वस्मादत आह । यदि सर्वथा विश्वप्रकारैर्यथाशक्त्यात्मना एव व्यक्तात्मनापि कार्यं घटादिक सत् विद्यमान पुमानिव पुंवत् साख्यपरिकल्पितपुरुषवत् । नोत्पत्तु नो प्रादुर्भवितुमर्हति योग्यं भवति । यद्यत्सर्वथा सत् न तदुत्पद्यते यथा सांख्यपुरुषः सच्च सर्वथाऽकार्यं तस्मान्नोत्पद्यते ॥ अथ व्यवस्था तस्य द्रव्यस्य धर्मान्तरत्यागैर्धर्मान्तरोपजनितः परिणाम इष्यतेऽत आह परिणामस्य प्रक्लृप्तिः कल्पना समर्थन च सर्वस्य नित्यत्वमिति योऽयमेकान्तस्तस्य बाधिनी निराकरणशीला विरोधिनी इत्यर्थः ॥

अतो बन्धमोक्षादिकमत्र न सम्भवति नित्यत्वात्प्रकृतिपुरुषयोस्तव मते पुन. सम्भवतीत्याह—

**पुण्यपापक्रिया न स्यात् प्रेत्यभाव· फलं कुतः ।**
**बन्धमोक्षौ च तेषां न येषां त्वं नासि नायकः ॥ ४० ॥**

वृत्तिः—मैत्रीप्रमोदकरुणादिक्रियाभावे कुत. पुण्यहेतुत्वात् पुण्य । हिं-

सादिरशुभपरिणामः पापहेतुत्वात्पाप। तयो क्रिया क्षयोपार्जन न स्यान्न भवेत्। अत एव क्रियाऽभावे कुत प्रेत्यभावो जन्मान्तरफल च सुखदुःखादिरूप कुत। वन्ध कर्मणाऽस्वतन्त्रीकरण मोक्ष स्वात्मोपलब्धि एतौ च द्वौ तेषा न येषा त्व नासि न भवसि नायक· प्रभुः। किमुक्त भवति एतत्सर्वं त्वच्छासन एव नान्येषा नित्यत्ववादिना कुतो विक्रियाऽभावात्॥

न केवल नित्यैकान्त एतेषामभाव किन्तु—

**क्षणिकैकान्तपक्षेऽपि प्रेत्यभावाद्यसम्भवः।**
**प्रत्यभिज्ञाद्यभावान्न कार्यारम्भः कुतः फलम्॥ ४१॥**

वृत्ति.—क्षणिको निरन्वयविनाश स एवैकान्तपक्षस्तस्मिन्नपि प्रेत्यभावादीना जन्मान्तरादीनामसम्भवोऽभावः। प्रत्यभिज्ञा स एवायमिति ज्ञान सा आदिर्येषा ते प्रत्यभिज्ञादयस्तेषामभावस्तस्मान्न कार्यारम्भ ओदनघटादेरारम्भ आदिक्रिया। अत कुत फल समर्पणादिक परिहारोऽनिष्टस्य। अस्मादेतत्कार्यं भविष्यति नान्यस्मादेतदपि न सम्भवत्येव। आदिशब्देन पर्यालोचनाध्यवसायादीना ग्रहण। यदि कश्चित् स्थिर कर्ता स्यादुपादानादीन्यपि यदि स्थिराणि सन्त्यस्य कार्यस्य। एतद्योग एव। तन्निराकरणमपि कथञ्चिद्यदि कार्यरूपेण परिणमनमपि तदा सर्वं सुघट नान्यथा॥

तत्र कारणे कार्यं मनागपि नास्तीति चेदत आह—

**यद्यसत्सर्वथा कार्यं तन्माजनि खपुष्पवत्।**
**मोपादाननियामोभून्माऽऽश्वासः कार्यजन्मनि॥ ४२॥**

वृत्तिः—सर्वथा शक्तिव्यक्तिस्वरूपेण यदसदविद्यमान तत्कार्यं माजनि माभूत्। खपुष्प गगनकुसुम तदिव खपुष्पवत्। उपादान मृत्पिण्डतत्त्वादिक तस्य नियामोऽस्मादेतत्कार्यं भवतीति निश्चय सोऽपि माभूत्। आश्वासोऽस्मादेतद्भविष्यत्ययमपि माभूत्। कार्यजन्मनि कार्योत्पत्तौ॥

पुनरपि दोषमुद्भावयितुमाह—

**न हेतुफलभावादिरन्यभावादनन्वयात्।**
**सन्तानान्तरवन्नैकः सन्तानस्तद्वतः पृथक्॥ ४३॥**

वृत्तिः—क्षणिकैकान्तपक्षे हेतु. कारण फल कार्यं तयोर्भावोऽस्तित्व आदिर्यस्य स हेतुफलभावादिरुपादानोपादेयस्वरूप कार्यकारणभावो वाच्यवाचकभावश्च न स्यात् । कुतोऽन्यभावादत्यन्तपृथक्त्वात् । तदपि कुतोऽनन्वयादेकस्य पूर्वापरावस्थाऽभावात् । तथा सन्तानान्तरे प्रस्तुतसन्तानादन्य सन्तान सन्तानान्तर तस्मिन्यथा न सम्भवति कार्यकारणभाव· मृत्पिण्डाद्धटइव । अभ्युपगम्यैतदुक्त परमार्थतस्तु सन्तानिभ्यो भिन्नेभ्य. पृथग्भूतेषु । ततो न कश्चिदेक· सन्तानोऽनुगतैकाकारः । अन्यानन्यभावाभ्या निराकृतत्वात् ॥ तस्मान्न सन्तानो नापि सन्तानिन इति ॥

पुनरपि तस्य दूषणमाह—

**अन्येष्वनन्यशब्दोऽयं संवृतिर्न मृषा कथम् ।**
**मुख्यार्थः संवृतिर्नास्ति विना मुख्यान्न संवृतिः ॥ ४४ ॥**

वृत्ति·—सत्य सन्तानिभ्यो व्यतिरिक्तः सन्तानो नास्ति किन्तु अन्येषु पृथग्भूतेषु योऽयमनन्यशब्दोऽनन्यबुद्धिश्च सन्तान. सा सवृतिरुपचार· । यद्येव कथ सा न मृषा व्यलीका भवेत् । न च मुख्यार्थ· सवृतिरस्ति तस्यास्तुच्छरूपत्वात् सवृतिस्तूपचार. । न च मुख्यार्थमन्तरेण सवृतिः, सति मुख्यार्थे तस्या· सम्भवो यथा सिंहोऽय माणवक , सति मुख्यसिंहे माणवके सिंहकल्पना । न चैव सवृतेरस्ति मुख्यार्थ इति ॥

अथैव परिकल्प्यते—

**चतुष्कोटेर्विकल्पस्य सर्वान्तेषूक्तयोगतः ।**
**तत्त्वान्यत्वमवाच्यं च तयोः सन्तानतद्वतोः ॥ ४५ ॥**

वृत्तिः— यथा सर्वधर्मेषु चतस्रः कोट्यो सत्त्वैकत्वादिषु विभागा यस्यासौ चतुष्कोटिर्विकल्पस्तस्य सदसदुभयादिभेदभिन्नस्य विकल्पस्य । उक्तिर्वचन तस्या अयोगोऽसम्भव । तयो· सन्तानतद्वतोश्चतुष्कोटेर्विकल्पस्य वचनस्यायोगात्तत्त्वान्यत्वमेकत्वानेकत्वमवाच्यम् ॥

चेदत आह—

**अवक्तव्यचतुष्कोटिविकल्पोऽपि न कथ्यताम् ।**
**असर्वान्तमवस्तु स्यादविशेष्यविशेषणम् ॥ ४६ ॥**

वृत्तिः— तदवक्तव्यचतुष्कोटिविकल्पोऽपि य सोऽपि न कथ्यता नोच्यता माभाणीदित्यर्थः । अन्यथा भेदाभेदोभयानुभयस्वरूपेणाभिलप्यत्वे कथञ्चिदनभिलप्यत्व स्यात् ॥ अन्यच्चैव सति असर्वान्त सर्वविकल्पातीतमवस्तु स्यात् । विशेष्यत इति विशेष्यतेऽनेनेति विशेषण तयोरभावात् ॥

अन्यच्च प्रतिषेधोऽपि न घटते, तत्कथमत आह—

**द्रव्याद्यन्तरभावेन निषेधः सञ्ज्ञिनः सतः ।**
**असद्भेदो न भावस्तु स्थानं विधिनिषेधयोः ॥ ४७ ॥**

वृत्तिः—द्रव्यमादिर्येषा ते द्रव्यक्षेत्रकालभावास्तेभ्योऽन्यानि द्रव्याद्यन्तराणि तेषामभावस्तेन परद्रव्यपरक्षेत्रपरकालपरभावस्वरूपेण य. प्रतिषेधःसतो विद्यमानस्य । सञ्ज्ञिनो नामवतो भवति । य पुनरसद्भेदो भावविशेषः परपरिकल्पितो नासौ भाव स्वलक्षण । विधिनिषेधयोरस्तित्वनास्तित्वयो. । स्थानमास्पद । कुत सर्वथा तस्य तुच्छत्वात् । तस्माद्भाव एव विधिनिषेधयोरवस्थान तस्यैव स्वपररूपेणास्तित्वनास्तित्वम् ॥

यत —

**अवस्त्वनभिलाप्यं स्यात् सर्वान्तैः परिवर्जितम् ।**
**वस्त्वेवावस्तुतां याति प्रक्रियाया विपर्ययात् ॥ ४८ ॥**

वृत्तिः— सर्वान्तैः सर्वधर्म । परिवर्जित विरहित । सर्वथा यत्तदनभिलाप्यमवाच्य वस्तु स्यात् न किञ्चिदपि भवेत् परपरिकल्पित । कथ तदवस्तुत्वमत आह—वस्त्वेवावस्तुता याति अर्थक्रियाया । सर्व एव पदार्थो भवति कुत प्रक्रियाया स्वरूपादिचतुष्टयलक्षणाया । विपर्ययात्पररूपादिचतुष्टयात् । तस्माद्यदवस्तु तदनभिलाप्य यथा न किञ्चित् । यत्पुनरभिलाप्य तद्वस्तु यथा खपुष्प । तस्मादेतदेवैकस्योपलब्धिर्यदन्यस्यानुपलब्धिरिति ॥

पुनरप्यवक्तव्यवादिनमुपालभते—

सर्वान्ताश्चेदवक्तव्यास्तेषां किं वचनं पुन॰ ।
संवृतिश्चेन्मृषैवैषा परमार्थविपर्ययात् ॥ ४९ ॥

वृत्तिः—यदि सर्वान्ता. सर्वधर्मा अवक्तव्या अवाच्यास्तेषां मताना यदेतद्वचनमुक्ति॰ " सर्वथा प्रतिक्षण निरन्वयविनाशिनो निरशा॰ सजातीयविजातीयव्यावृत्ता इत्यादिक " पुनः पुनरावर्तमान किमर्थं स्यात् । अथ मत परमार्थं न तद्भवेत्किन्तु सवृतिः । यद्येव मृषैवैषा व्यलीकैव सा । कुतः । परमार्थस्य तत्त्वरूपस्य विपर्ययोऽभाव. सवृतिर्नामोपचारः । न च सा परमार्थमन्तरेण भवति ॥

अशक्यत्वादवाच्यं किमभावात्किमबोधतः ।
आद्यन्तोक्तिद्वयं न स्यात् किं व्याजेनोच्यतां स्फुटम् ॥५० ॥

वृत्तिः—इद तावदवक्तव्यवादी प्रष्टव्यः । किमशक्यत्वादसामर्थ्यादवाच्यम् ? आहोस्विदभावात् ? किमज्ञानात् ? विकल्पत्रयम् । न तावदशक्यत्वाद्दशनागसहस्रबलत्वाद् बुद्धस्य । नाप्यज्ञानात्सर्वज्ञत्वेन परिकल्पितः । यतो यस्मादाद्युक्तिरादिविकल्पोऽन्तोक्तिस्तृतीयविकल्प एतद्द्वय न भवेत् । तस्मात्किं व्याजेन छद्मना । उच्यता भण्यतामभावादेवावाच्यं स्फुटमिति । न चैतदभावमात्र प्रमाणसिद्ध प्रमाणस्याप्यभावात् ॥

क्षणिकैकान्तवादिकल्पिता हिंसा पञ्चभिः कारणैः प्राणप्राणिजनव्याघातचित्ततद्गतचेष्टाप्राणवियोगैर्न । बन्धमोक्षादिश्च न घटत इत्याह—

हिनस्त्यनभिसन्धातृ न हिनस्त्यभिसन्धिमत् ।
बद्ध्यते तद्द्वयापेतं चित्तं बद्धं न मुच्यते ॥ ५१ ॥

वृत्ति.—क्षणिककान्तवादेऽभिसन्धिमन्मारणाभिप्रायवत् । चित्त तत्परिकल्पितरूपज्ञान जीवसदृश तत्प्राणिन न हिनस्ति न मारयति । यच्च हिनस्ति तदनभिसन्धातृ अनभिप्रायवत् । बध्यते च कर्मणा तद्द्वयापेतम् ॥

तद्वचनविरोध दर्शयति—

**अहेतुकत्वान्नाशस्य हिंसाहेतुर्न हिंसक. ।**
**चित्तसन्ततिनाशश्च मोक्षो नाष्टाङ्गहेतुकः ॥ ५२ ॥**

वृत्तिः—यो हिंसाया हेतुर्निमित्त नासौ हिंसक प्राणवियोजक कुतोऽहेतुकत्वान्नाशस्य । यदेतत्प्राणिनो मरणनिमित्त यश्च मोक्षस्तैरभ्युपगत चित्ताना रूपविज्ञानलक्षणाना सन्ततिर्नैरन्तर्यं तस्य नाश क्षय॰ प्रदीपनिर्वाणरूपो वा । अष्ट अङ्गान्यवयवा यस्य स हेतुर्यस्यासो अष्टाङ्गहेतुक । कानि तान्यष्टाङ्गानि सम्यक्त्वसज्ञासज्ञिवाक्कायकर्मान्तर्व्यायामस्मृतिसमाधिलक्षणानि। सोऽपि न स्यात् । कुत स्वत एव हेतुमन्तरेणाभ्युपगतत्वात् ॥

अथ मत स्वभावविनाशार्थं न निमित्तमस्माभिरिष्यते, किन्तु विभागार्थमित्यत आह—

**विरूपकार्यारम्भाय यदि हेतुसमागमः ।**
**आश्रयिभ्यामनन्योऽसावविशेषादयुक्तवत् ॥ ५३ ॥**

वृत्ति —विरूपकार्यं विभागसन्तान कपालादिस्तस्यारम्भस्तस्मै विरूपकार्यारम्भाय । यदि हेतो समागम कारणापेक्षण । तर्ह्यसो विरूपकार्यारम्भ आश्रयिभ्यामुत्पादविनाशाभ्यामनन्योऽभिन्न. कुतोऽविशेषादभेदात् । अविशेषेणाभेदोपलब्धिराश्रयिभ्यो यत । अयुक्तवत् ग्राह्यग्राहकाकाराभ्या अयुतसिद्धयो ॥

चित्तविशेषरूपरसादिवद्धान् प्रागुत्पादादीनभ्युपगम्य क्षणिकवादे दूपणमभाणि । साम्प्रत तु तेपामुत्पादादीनामसम्भवमेव दर्शयन्नाह—

**स्कन्धाः सन्ततयश्चैव संवृतित्वादसंस्कृता॰ ।**
**स्थित्युत्पत्तिव्ययास्तेपां न स्युः खरविपाणवत् ॥ ५४ ॥**

वृत्तिः—स्कन्धा रूपवेदनाविज्ञानसंज्ञासंस्कारास्तेपा सन्ततयश्च कार्यकारणयोरविच्छेदा. । एवकारोऽवधारणार्थ । असंस्कृता एवापरमार्था एव । कुत संवृतित्वान्मिथ्यारूपत्वात् । अतस्तेपा स्थिति. । सदवस्थानमुत्पत्तिर्घटावस्था विनाश कपालादिरूपस्ते न स्युर्न भवेयु खरविपाणवत् । तथा खरविपाणस्य स्थित्युत्पत्तिव्यया न सन्त्येवमेतेपामभाव प्रत्यविशेषात् ।

यत्पुनः संस्कृत तत्परमार्थसत् यथा स्वलक्षणम् । न तथा स्कन्धाः सन्ततयश्च । तत. स्थित्युत्पत्तिविरहस्ततोऽपि विभागसन्तानोत्पत्तये विनाशहेतुरिति पोप्लूयते ॥

यस्य मिथ्यादृश उभयेकान्तपक्षस्तन्निरासार्थमाह—

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।**
**अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ५५ ॥**

वृत्तिः—उभयैकात्म्य नित्यानित्यैकान्तद्वयमयुक्तमङ्गीकर्तुं कुतो मिथ्यादृशां तद्विरोधात् । अनभिलाप्यमपि न युक्तमनेकान्तवैरिणाम् ॥

एकान्तवादिपक्ष निरस्यानेकान्त समर्थयन्नाह—

**नित्यं तत् प्रत्यभिज्ञानान्नाकस्मात्तदविच्छिदा ।**
**क्षणिकं कालभेदात्ते बुद्ध्यसञ्चरदोषतः ॥ ५६ ॥**

वृत्तिः—तच्छब्देन तत्त्वमुच्यते प्रस्तुतत्वात् तत्त्व कथञ्चिन्नित्य । प्रत्यभिज्ञानात् । वस्तुन पूर्वापरकालव्याप्तिः प्रत्यभिज्ञान। यथा स एवाय देवदत्त इत्यादि । तस्मात्प्रत्यभिज्ञानात् । तस्य प्रत्यभिज्ञानस्य अविच्छिदा अविच्छेदोऽन्वय. । सोऽकस्मादहेतोर्न भवति यस्मात् । न च नित्यत्वमेव । कालभेदात्परिणामवशात् क्षणिक नश्वर । तवार्हद्भट्टारकस्य नान्यस्य क्षणिकाक्षणिकवादिनः । बुद्धेरसचारोऽसचरणमन्यत्रागमन स एव दोपस्तस्मात् । न हि एक पदार्थं विज्ञायान्यस्य पदार्थस्य परिच्छित्ति. सम्भवति । उभयैकान्ते पुनः सुघटा ॥

तदेव दर्शयति—

**न सामान्यात्मनोदेति न व्येति व्यक्तमन्वयात् ।**
**व्येत्युदेति विशेषात्ते सहैकत्रोदयादि सत् ॥ ५७ ॥**

वृत्तिः—कथमनेकान्ते त्रयमेकस्मिन् सभवतीति चेदत आह । सामान्यात्मना द्रव्यरूपेण नोदेति नोत्पद्यते न व्येति न विनश्यति कुतोऽन्वयात् सर्वपर्यायेष्वनुगतैकाकारेण वर्तनात् व्यक्त स्फुटमेतत् । विशेपात्पर्यायरूपेणोत्पद्यते विनश्यति च । तवार्हत. । सह युगपदेकत्रैकस्मिन् वस्तुनि । उदयादि सत् उत्पादविनाशस्थितय. सत्यो विरोधाभावात् ॥

कथ य एवोत्पादः स एव विनाशो यावेव विनाशोत्पादौ तावेव स्थिति॰ रित्यत आह—

**कार्योत्पादः क्षयो हेतोर्नियमाल्लक्षणात्पृथक् ।**
**न तौ जात्याद्यवस्थानादनपेक्षाः खपुष्पवत् ॥ ५८ ॥**

वृत्तिः—योऽय कार्यस्योत्पाद स एव हेतोरुपादानकारणस्य क्षयो विनाशो नियमान्निश्चयात् । लक्षणात्पुन पृथग्भिन्नौ स्वरूपभेदात् । जात्यादेरवस्थानात् मत्त्वप्रमेयत्वादिना न तौ भिन्नौ कुतस्तेन रूपेणैकत्वात् ।अनपेक्षाः परस्परापेक्षामन्तरेण ते स्थित्युत्पत्तिविनाशा॰ खपुष्पसमानाः । तस्मादेते कथञ्चित् परस्परमभिन्ना कथञ्चिद्भिन्नाश्च भवन्ति ॥

लौकिकदृष्टान्तेन स्पष्टयन्नाह—

**घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम् ।**
**शोकप्रमोहमाध्यस्थ्यं जनो याति सहेतुकम् ॥ ५९ ॥**

वृत्तिः—अय जनस्त्रितयार्थी यो घटार्थी स तस्मिन् भग्ने शोक याति । यश्च मौल्यर्थी स तस्मिन्नुत्पन्ने हर्षं याति । यश्च सुवर्णार्थी स माध्यस्थ्य याति सुवर्णसद्भावात् । नचैतदहेतुक किन्तु सहेतुकमेव । तदेव सुवर्णद्रव्य घटस्वरूपेण विनश्यति तदेव मौलिस्वरूपेणोत्पद्यते सुवर्णस्वरूपेणानुगतैकाका॰ रस्वरूपेण तिष्ठति । एव मर्वं वस्तु ॥

पुनरपि लोकोत्तरदृष्टान्तेन पोषयति—

**पयोव्रतो न दध्यत्ति न पयोऽत्ति दधिव्रतः ।**
**अगोरसव्रतो नोभे तस्मात्तत्त्व त्रयात्मकम् ॥ ६० ॥**

वृत्तिः—यस्य पयो दुग्धमेवाह भुञ्ज इति व्रत नियमो नासौ दध्यत्ति दधि भुङ्क्ते । यस्य च दध्यह भुञ्ज इति व्रत नासौ पयोऽत्ति दुग्ध भुङ्क्ते । यस्य चागोरसमह भुञ्ज इति व्रत नासावुभयमत्ति । कुतो गोरसरूपेण तयोरेकत्वात् । दुग्धव्रतस्य दधिरूपेणाभावात् । दधिव्रतस्य पयोरूपेणाभावात् । अगोरसव्रतस्य दधिदुग्धरूपेणाभावात् । तस्मात्तत्त्व वस्तु त्रयात्मक स्थित्युत्पत्तिव्ययात्मक सुघटमेतदनेकान्ते जैनमत इति स्थितम् ॥

द्रव्यपर्यायरूपं तत्त्व व्यवस्थाप्य नैयायिकवैशेपिकमतमाशङ्क्य दूषयितुकाम· प्राह—

**कार्यकारणनानात्वं गुणगुण्यन्यताऽपि च ।**
**सामान्यतद्वदन्यत्वं चैकान्तेन यदीष्यते ॥ ६१ ॥**

वृत्ति·—कार्यं घटादिरूप कारणं मृत्पिण्डादिक तयोर्नानात्व भेद इष्यते चेत् गुणो रूपादिर्गुणी द्रव्य तयोरपि यद्यन्यतेष्यते सर्वथा भेद इष्यते सामान्यं बुद्ध्यभिधानप्रवृत्तिलक्षण तद्वत्सामान्यवत् व्यक्तयः। तयोश्च यद्यन्यतेष्यते सर्वथैकान्तेन ॥

नदानीं किं स्यादत आह—

**एकस्यानेकवृत्तिर्न भागाभावाद्बहूनि वा ।**
**भागित्वाद्वाऽस्य नैकत्वं दोषो वृत्तेरनार्हते ॥ ६२ ॥**

वृत्तिः—एकस्यावयव्यादे. कार्यस्य घटादेरनेकेपु स्वारम्भकावयवेपु वृत्तिर्वर्तन सा न स्यात् कुतो भागाभावात् निरवयवत्वात्। अवयविनो अर्थे वर्तन्ते। अवयववहुत्व स्यादनिष्ट चैतत्। अथास्य भागा. परिकल्प्यन्त एव सति नैकत्वमस्य भागित्वात्। तस्मादनार्हते मते वृत्तेर्विकल्पस्य सर्वात्मनैकदेशेन दोप एव। आर्हते पुनर्मते सर्वं युक्तमनेकान्तात्।

पुनरपि भेदपक्षे दूपणमाह—

**देशकालविशेषेऽपि स्याद्वृत्तिर्युतसिद्धवत् ।**
**समानदेशता न स्यात् मूर्तकारणकार्ययोः ॥ ६३ ॥**

वृत्तिः—देश· क्षेत्र कालः समयादिक तयोर्विशेपो भेदस्तस्मिन्नपि तयोरवयवावयविनोर्या वृत्तिर्वर्तन स्यात् युतसिद्धानामिव पृथग्भिन्नानामिव युतसिद्धवत् घटपटादिवदित्यर्थ·। अन्यच्च समानदेशता न स्यात् तयोरवयवावयविनोरेकस्मिन्नवस्थान न स्यात् मूर्तिमत्त्वात् यथा खरकरभयो ॥

पुनरपि भेदवादिन प्रति दूपणमाह—

**आश्रयाश्रयिभावान्न स्वातन्त्र्यं समवायिनाम् ।**
**इत्ययुक्तः स सम्बन्धो न युक्त. समवायिभिः ॥ ६४ ॥**

वृत्तिः—स्वातन्त्र्य स्वप्रधानता तेषा नास्ति कुतः आश्रया स्वारम्भकावयवा आश्रयी अवयवी कार्यादिस्तयोर्भावस्तस्मात् । यस्मात् आश्रयमन्तरेण नाश्रयी वर्तते नाश्रयिणमन्तरेणाश्रय परस्परप्रतिबन्धात्। तस्मान्न कालादिभेदेन वृत्तिस्तेषा समवायिना कार्यकारणानामिति चेदत्रोत्तरमाह । सोऽप्युक्तः सम्बन्ध समवायिभि सह न युक्त समवायसम्बन्ध परैरिष्ट कार्यकारणादिभि॰ सह स न घटते विचार्यमाणायोगात् ॥ अनवस्थादिदोषादिति ॥

तदेव विघटयन्नाह—

**सामान्य समवायश्चाप्येकैकत्र समाप्तित॰ ।**
**अन्तरेणाश्रयं न स्यान्नाशोत्पादिषु को विधिः ॥ ६५ ॥**

वृत्तिः—सामान्य भिन्नेष्वभिन्नकारण । समवाय इहेद प्रत्ययलक्षण । एकैकत्र एकस्मिन्नवयवे व्यक्तौ वा । समाप्तित॰ समाप्तेर्व्याप्यस्थितत्वादित्यर्थ । आश्रयमन्तरेण यस्मात्तयोरवस्थान नास्ति एव सति । नाशोत्पादा विद्यन्ते येषा तेषु नाशोत्पादिषु खण्डमुण्डघटपटादिषु को विधि क क्रम किन्तु न कश्चिदपि स्यात् ॥

पुनरपि सम्बन्धस्य दूषणमाह—

**सर्वथाऽनभिसम्बन्धः सामान्यसमवाययोः ।**
**ताभ्यामर्थो न सम्बद्धस्तानि त्रीणि खपुष्पवत् ॥ ६६ ॥**

वृत्तिः—परस्परेण सर्वथा सर्वप्रकारेणानभिसम्बन्धोऽसयोगोऽतस्ताभ्या सामान्यसमवायाभ्या अर्थो गुणगुण्यादिर्न सम्बद्धो न लग्नोऽतस्तानि त्रीण्यपि सामान्यसमवायार्थरूपाणि खपुष्पसमानानि ॥

सत्यमेवैतत् समवायादीना दोष॰ । अस्माक पुन॰ परमाणूनामेकान्तेनानन्यत्वमिच्छता न दोष इत्यत्र दूषणमाह—

**अनन्यतैकान्तेऽणूनां सङ्घातेऽपि विभागवत् ।**
**असंहतत्व स्याद्भूतचतुष्कं भ्रान्तिरेव सा ॥ ६७ ॥**

वृत्ति — परमाणूना द्वितीयविभागरहिताना सङ्घातेऽपि प्रचयेऽपि असहतत्व स्यात् विभागवत् यथा घटपटयोः । नान्यताऽनन्यता सैवैकान्तस्तस्मिन्

परमाणूनामन्यथास्वरूपेण परिणामायोगात् । एकदेशेन सर्वात्मना वा तथा वृत्तिविरोधात् । सहस्राणुमात्रपिण्डप्रसङ्गादणो । तस्मात्प्रविरलत्व [प्रविकलत्व?] मणूना ततो धारणाकर्षणादयो न स्युः । भूताना पृथिव्यादीना चतुर्णां भावश्चतुष्क सा भ्रान्ति स्यात् भूतचतुष्टय भ्रान्त स्यादित्यर्थः ॥

सत्यमेव नैतत्प्रमाणं भावात् ( ? ) पुनरपि दूषणमाह—

**कार्यभ्रान्तेरणुभ्रान्तिः कार्यलिङ्गं हि कारणम् ।**
**उभयाभावतस्तत्स्थं गुणजातीतरच्च न ॥ ६८ ॥**

वृत्तिः—अणूना यदेतत्कार्यं स्थूलघटपटादिक तस्य यदि भ्रान्तिविभ्रमस्तदानीं कार्यभ्रान्तेरणूनामपि भ्रान्ति. । यत. कार्यलिङ्ग कारण कार्यद्वारेण कारणस्यावगमो नान्यथाऽतोऽन्यतराभावे उभयोरप्यभावोऽविनाभाविनियमात्। उभयाभावाच्च तयोः स्थितं गुणो रूपादिर्जातिः सामान्यमितरच्च क्रिया एतत्समुदित न स्यात । न चैतदिष्टं सर्वप्रमाणप्रसिद्धत्वात् ॥

**एकत्वेऽन्यतराभावः शेषाभावोऽविनाभुवः ।**
**द्वित्वसंख्याविरोधश्च संवृतिश्चेन्मृषैव सा ॥ ६९ ॥**

वृत्तिः—कार्यकारणयोरेकत्वे द्वयोर्मध्येऽन्यतराभावस्तस्य चाभावे द्वितीयस्य चाभाव । कुतोऽविनाभावनियमात् । न ह्येकमन्तरेणापर भवति ॥ द्वित्वमिति च या सख्या तस्याश्च विरोधोऽघटना । अथ मत सवृत्या सर्व युक्त सा सवृतिर्मृषैव व्यलीकैव ततो न किंचित् स्यात् वन्ध्यासुतपरिकल्पितरूपव्यावर्णनवत् ॥

उभयैकान्तवादिन प्रत्याह—

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।**
**अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ७० ॥**

वृत्तिः—अवयवावयविन्यतिरेकाव्यतिरेकैकान्तौ न यौगपद्येन सम्भविनौ विरोधात् स्ववचनविरोधात् । अनभिलप्यैकान्तोऽपि न सम्भवति । स्याद्वादाभ्युपगमे तु न दोषः कथंचित् तथाभावोपलब्धे ॥

तथैव स्पष्टयति—

द्रव्यपर्याययोरैक्यं तयोरव्यतिरेकत ।
परिणामविशेषाच्च शक्तिमच्छक्तिभावत· ॥ ७१ ॥

वृत्तिः—कारण गुणी सामान्य वस्तु द्रव्यमित्युच्यते, कार्यं गुणो विशेष पर्याय इत्युच्यते,तयोरैक्यमेकत्व कुतस्तयोरव्यतिरेकतो द्रव्यपर्याययोरव्यतिरेकोपलम्भात् । एतेनास्य हेतो प्रतिज्ञार्थैकदेशासिद्धत्व प्रत्युक्तम् । परिणाम कारणस्यान्यथाभाव. वाग्गोचरोऽतीतस्तस्य विशेषश्च तस्मात्परिणामविशेषाच्च तयोरैक्य । शक्तयो विद्यन्ते यस्य तच्छक्तिमत् द्रव्य परिणामि । प्रतिनियतकार्यसम्पादनसामर्थ्यविशेषा शक्तयो यथा घृतादे स्नेहतर्पणबृंहणाद्य । तयोर्भावस्तस्मात् तयोरैक्यमिति वेदितव्यम् ॥

कथञ्चिद्भेदनिरूपणार्थमाह—

संज्ञासंख्याविशेषाच्च स्वलक्षणविशेषत. ।
प्रयोजनादिभेदाच्च तन्नानात्व न सर्वथा ॥ ७२ ॥

वृत्तिः—सज्ञा नाम, सख्या एकादिका, तयोर्विशेषो भेदस्तस्मात्तयोर्नानात्व भेदो दृश्यते । च सज्ञाभेद ऊढाऽत्र वधू प्रमदा कामिनी क्रोधवती भामा । द्वित्वादेकत्व सख्याभेदोऽपि प्रतीत । स्वमसाधारण लक्षण स्वरूप यस्य स चासौ विशेषस्तस्मात्तयोर्नानात्व । तथा च द्रव्येणान्यत्प्रयोजन पर्यायेणान्यत् वृक्षपत्रपुष्पवत् ॥

अपेक्षानपेक्षैकान्तप्रतिक्षेपार्थमाह—

यद्यापेक्षिकसिद्धि· स्यान्न द्वयं व्यवतिष्ठते ।
अनापेक्षिकसिद्धौ च न सामान्यविशेषता ॥ ७३ ॥

वृत्ति·—अपेक्षैव प्रयोजनमेषामर्थाना तेषा सिद्धिर्निष्पत्तिर्निश्चितिर्वा । अथवाऽऽपेक्षिकी चासो सिद्धिश्च सा यदि स्यात् । कार्यकारणादि युगपद्वय न व्यवतिष्ठते न घटते । एकैनैकस्य प्रतिहतत्वात् ॥ यदि पुनरनापेक्षिकसिद्धिस्तस्यामभ्युपगम्यमानाया सामान्य च विशेषश्च तयोर्भाव सामान्यविशेषता सा न स्यान्न भवेत् । तस्मात्स्वरूपेण स्वत एव सिद्धेन भवितव्यम् ॥ धर्मिधर्मभावश्च परस्परापेक्ष ॥

उभयैकान्तं दर्शयन्नाह—

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।**
**अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ७४ ॥**

वृत्तिः— अपेक्षानपेक्षैकान्तोभय नास्ति विरोधात् । नाप्यवाच्यमवाच्यत्वेनापि वाच्यत्वात् ॥

तयोरनेकान्तं दर्शयन्नाह—

**धर्मधर्म्यविनाभावः सिद्ध्यत्यन्योऽन्यवीक्षया ।**
**न स्वरूपं स्वतो ह्येतत् कारकज्ञापकाङ्गवत् ॥ ७५ ॥**

वृत्तिः— क्रमभावि पिण्डादि कार्यं सहभावी रूपादिर्गुणो विसदृशपरिणामलक्षणश्च विशेषो धर्मोऽत्र कथ्यते । कारणादिव्यपदेश द्रव्य धर्मी । स्वधर्मापेक्षया द्रव्यस्य धर्मिव्यपदेश· ।स्वधर्म्यपेक्षया च रूपादेश्च धर्मव्यपदेशस् तयोर्योऽविनाभावोऽव्यभिचारोऽवश्य सोऽन्योऽन्यापेक्षया सिद्ध्यति भासते उत्पद्यते वा। स्वरूपमसाधारण रूप तयोर्न परत ।कुतो यस्मात्स्वत एव तत्सिध्यति यथा कारकज्ञापकाङ्गे कारकक्रियाया अङ्ग ज्ञापकक्रियाया अङ्ग निवन्धन तयोरिव तद्वत् कर्तृकर्मकवोध्यवोधकवदित्यर्थः । अथवा अङ्गशब्दो विशेषार्थो द्रष्टव्यो यथा कर्मकर्तृव्यपदेशाविनाभावो वोध्यवोधकव्यपदेशाविनाभावश्च सिध्यत्यन्योन्यापेक्षयैवमत्रापीत्यर्थ. ॥

उपेयतत्त्व व्यवस्थाप्योपायतत्त्वव्यवस्थापनार्थमाह—

**सिद्ध चेद्धेतुतः सर्वं न प्रत्यक्षादितो गतिः ।**
**सिद्धं चेदागमात्सर्वं विरुद्धार्थमतान्यपि ॥ ७६ ॥**

वृत्तिः— यदि सर्वं हेतुतो निमित्तात्सिद्धमवगत तर्हि प्रत्यक्षादितः प्रत्यक्षागमादेर्गतिरवगमो न स्यात्। दृश्यते चैन्द्रियकस्याशनपानादेरर्थस्यातीन्द्रियस्य मलयकाश्मीरादेरत्र क्रमेण प्रत्यक्षादाप्तोपदेशतश्च गतिरिति ॥ अथागमादाप्तोपदेशात्सर्वं चेष्यते ततो विरुद्धार्थानि यानि मतानि तान्यपि सिद्धिमुपगच्छेयुरिति ॥

उभयैकात्म्यैकान्तं निराकर्तुमाह—

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।**
**अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ७७ ॥**

वृत्तिः—उभयैकान्तत्वं नास्ति विरोधात् । अवाच्यमपि न ॥

पुनरप्यनेकान्तनिरूपणार्थमाह—

**वक्तर्यनाप्ते यद्धेतोः साध्यं तद्धेतुसाधितम् ।**
**आप्ते वक्तरि तद्वाक्यात् साध्यमागमसाधितम् ॥ ७८ ॥**

वृत्तिः—यो यत्राविसंवादकः स तत्राप्तः । ततः परोऽनाप्तः । अनाप्ते वक्तरि तत्त्वस्योपदेष्टरि हेतोरनुमानाद्यत्साध्यं शक्याऽभिप्रेतं प्रसिद्धं तद्धेतुसाधितं लिङ्गात्प्रतिपादितं । आप्ते वक्तरि वाक्याद्वचनाद्यत्साध्यं तदागमसाधितं प्रवचनप्रतिपादितं प्रमाणभूतं वचनं हि तत् । अनाप्ते पुनर्विसंवादकं तस्माद्धेतुमन्तरेण न तत्सेत्स्यति ॥

अन्तस्तत्त्वमेव तत्त्वमिति येषां मतं तन्निराकरणायाह—

**अन्तरङ्गार्थतैकान्ते बुद्धिवाक्यं मृषाऽखिलम् ।**
**प्रमाणाभासमेवातस्तत्प्रमाणादृते कथम् ॥ ७९ ॥**

वृत्तिः—अन्तरभ्यन्तरमङ्गं कारणं यस्य सचासावर्थश्च तस्य भावोऽन्तरङ्गार्थता सैवैकान्तो मिथ्यात्वं तस्मिन् । बुद्धिश्च बहिरर्थपरिच्छेदिका । वाक्यं चानुमाननिमित्तं परार्थं । द्वन्द्वैकवद्भावः । तदखिलं निरवशेषं मृषा मिथ्या। प्रमाणमिव भासत इति प्रमाणाभासमेव । यद्येवं कथं मुख्यप्रमाणमन्तरेण तत्प्रमाणाभासं यस्मात्सति प्रमाणे प्रमाणाभासो नान्यथा ॥

अथ मतं सर्वं बाह्याभ्यन्तरं ज्ञानमेवैतस्य मतस्य निराकरणार्थमाह—

**साध्यसाधनविज्ञप्तेर्यदि विज्ञप्तिमात्रता ।**
**न साध्यं न च हेतुश्च प्रतिज्ञाहेतुदोषतः ॥ ८० ॥**

वृत्तिः—साध्यत इति साध्यं शक्यमभिप्रेतमप्रसिद्धं पक्षधर्मं । साध्यतेऽनेनेति साधनं प्रकृतेनाविनाभावि तयोराकारो विज्ञप्तिर्विज्ञानं तस्या यदि विज्ञप्तिमात्रता ज्ञानमात्रत्वं । न साध्यं न च हेतुः चकारान्नापि दृष्टान्तः ।

कुत. प्रतिज्ञादोषाद्धेतुदोषाच्च । निरंशत्वमभ्युपगम्य सभेद साधयेदभ्युपगमहानिः । प्रतिज्ञाहेतुदोषोऽतः प्रतिज्ञादोषे हेतुदोषेऽकिञ्चित्कराख्य. । अथवा प्रतिज्ञैव हेतु स दोषस्तस्मात् । यस्मान्न तदेव साध्य तदेव साधन निरंशत्वात्तस्य ॥

अथान्तरङ्गार्थतैकान्ते दोषदर्शनाद्बहिरङ्गार्थोऽभ्युपगम्यते तत्रापि दोष दर्शयति—

**बहिरङ्गार्थतैकान्ते प्रमाणाभासनिह्नवात् ।**
**सर्वेषां कार्यसिद्धिः स्याद्विरुद्धार्थाभिधायिनाम् ॥ ८१ ॥**

वृत्तिः—बहिरङ्गार्थतैकान्तो बाह्यार्थैकान्तस्तस्मिन्नभ्युपगम्यमाने विरुद्धार्थाभिधायिना प्रमाणान्तरबाधितार्थप्रकाशकाना सर्वेषा निरवशेषाणा कार्यस्य सिद्धिर्निष्पत्ति· स्यात्स्वव्यवहारसिद्धिर्भवेदित्यर्थ. । कस्मात्प्रमाणाभासनिह्नवात् प्रमाणस्याभासो मिथ्यात्व तस्य निह्नवो निराकरण तस्मात् । एतदपि कुतोऽन्तस्तत्वे सति बहिरर्थस्य सिद्धिरसिद्धिश्च नान्यथा ॥

उभयैकान्तप्रतिक्षेपायाह—

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।**
**अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ८२ ॥**

वृत्तिः—पूर्ववत् ॥

भाव एव तत्त्व नाभाव इति यस्य मत तन्निराकरणायाह—

**भावप्रमेयापेक्षायां प्रमाणाभासनिह्नवः ।**
**बहिःप्रमेयापेक्षायां प्रमाणं तन्निभं च ते ॥ ८३ ॥**

वृत्ति·—भावो ज्ञान तदेव प्रमेय तस्य तस्मिन्वाऽपेक्षाऽभ्युपगमस्तस्यामभ्युपगम्यमानाया । प्रमाणाभासस्य निह्नवो लोप. । कुतो ज्ञानस्य तदेतत्प्रामाण्यमप्रामाण्य च बाह्यार्थापेक्षाया भवति नान्यथा इति ॥

एतच्च मत सर्व वचो विवक्षामात्रसूचकमित्यस्य निराकरणायाह—

**जीवशब्दः सबाह्यार्थः सञ्ज्ञात्वाद्धेतुशब्दवत् ।**
**मायादिभ्रान्तिसंज्ञाश्च मायाद्यैः स्वैः प्रमोक्तिवत् ॥ ८४ ॥**

वृत्ति·—जीवस्य शब्दः संज्ञा देशामर्शकत्वाद्धटादिसंज्ञाः परिगृह्यन्ते । सह बाह्येनार्थेन वर्तत इति सबाह्यार्थः । कुत· सञ्ज्ञात्वात्सनामत्वाद्धेतुशब्द-वत् । शब्दस्यार्थस्त्रिधा बहिरर्थो घटाद्याकारः स्वार्थो वा । तथाचोक्तम् । स्वार्थमभिधाय क्वाऽप्यन्यत्र वर्तत इति ॥ यद्येवं भ्रान्तिसंज्ञा यास्ताः कथं । ता अपि स्वैरात्मस्वरूपैरर्थैर्मायाद्यैर्माया स्वप्नेन्द्रजालादिः । भ्रान्तिसंज्ञाः स्वार्थवत्य प्रमाया उक्तिर्यथा प्रमाणशब्दः प्रमाणाभासशब्दश्च यथा स्वार्थ· प्रतिपादक । अथवा सम्यक् ज्ञायतेऽनयेति सञ्ज्ञा तस्या भाव. सञ्ज्ञात्वम् ॥ तस्माद्देशामर्शकत्वादन्येषामपि ग्रहण प्रमाणतन्निबन्धनविचाराभ्यासदानफ· लादीनाम् । एतेषामन्यथाऽनुपपत्तेर्जीवादिशब्द· सबाह्यार्थः । अन्यथा एतेषाम· भावः स्यात् ॥

सिद्धसाध्यतापरिहारद्वारेणामुमेवार्थं प्रकटयन्नाह—

**बुद्धिशब्दार्थसंज्ञास्तास्तिस्रो बुद्ध्यादिवाचिकाः ।**
**तुल्या बुद्ध्यादिबोधाश्च त्रयस्तत्प्रतिबिम्बकाः ॥ ८५ ॥**

वृत्ति.—बुद्धिश्च शब्दश्चार्थश्च बुद्धिशब्दार्थास्तेषा संज्ञास्तिस्त्रस्त्रिसंख्या· ॥ बुद्धिरादिर्येषा ते बुद्ध्यादयस्तेषा वाचिका प्रतिपादिकाः । तुल्या. समाः केन बुद्ध्याद्यर्थप्रतिपादकत्वेन । बुद्ध्यादीना बोधाश्च ज्ञानानि च बुद्ध्याद्यर्थस्य प्रति-निधयस्त्रयस्तेऽपि तुल्या अर्थप्रतिपादकत्वेन ॥ किमुक्त भवति—गौरिति जानीतेतीय बुद्धेर्वाचिका संज्ञा । तस्याश्च श्रोतुः पुरुषस्य स्वार्थे बोधे बोधको बोधो भवति । गौरित्याहेतीयशब्दस्य स्वस्यैव रूपस्य वाचिका संज्ञा । तस्याश्च श्रोतुः पुरुषस्य स्वार्थे शब्दस्य स्वस्मिन्नेव रूपे बोधको बोधो भवति । गामा-नय दोहार्थमितीय संज्ञा बाह्यार्थस्य वाचिका भवति । तस्याश्च श्रोतु. स्वार्थे सास्नादिमति पिण्डे बोधको बोधो भवति । ततो बुद्ध्याद्यर्थवाचकत्वेन संज्ञा-स्तिस्र. समा एव बुद्ध्यादीना शब्दार्थानां त्रयोऽपि बोधका वेदका बोधा बुद्ध्यादिशब्दार्थप्रतिभासकाश्च समा एव तत्प्रतिभासकत्वेन ॥

पुनरप्याशंक्य तमेव बाह्यार्थं प्रतिपादयन्नाह—

**वक्तृश्रोतृप्रमातॄणां वाक्यबोधप्रमाः पृथक् ।**
**भ्रान्तावेव प्रमाभ्रान्तौ बाह्यार्थौ तादृशेतरौ ॥ ८६ ॥**

वृत्तिः—वक्ता च श्रोता च प्रमाता च वक्तृश्रोतृप्रमातारस्तेषां वक्तृश्रोतृप्रमातॄणां वाचकश्रावकज्ञापकानां । यथासंख्यं वाक्यं च बोधश्च प्रमा च वाक्यबोधप्रमाः शब्दशाब्दप्रत्यक्षानुमानानि । पृथक्व्यवस्थितलक्षणानि । भ्रान्तावेव यदि भ्रान्तिस्वरूपे व्यवतिष्ठेरन् न तु वर्तेरन्निति वाक्यशेषः । ततः को दोषः स्यादित्याह—प्रमाभ्रान्तौ सर्वेषां प्रमाणानां बाह्यापेक्षायां द्वैविध्ये सति प्रमाणयोः प्रत्यक्षाप्रत्यक्षयोः प्रत्यक्षानुमानयोर्वा भ्रान्तौ भ्रान्तिस्वरूपतायां सत्यामपि । बाह्यार्थौ बाह्यविशेषौ दृश्यानुमेयाख्यौ । तादृशात्प्रस्तुताभ्रान्तस्वरूपादितरावन्यावभ्रान्तस्वरूपौ क्रमाक्रमानेकान्तात्मकौ सन्तौ विभावनीयौ स्याताम् ॥ अथ वा प्रमाभ्रान्तौ बाह्यार्थौ भ्रान्तावेव तत इदं भ्रान्तमिदमभ्रान्तमिति विचारोऽनर्थकः स्यात् ॥

बाह्यार्थे सति प्रमाणमप्रमाणं च युज्यते नान्यथाऽत आह—

**बुद्धिशब्दप्रमाणत्वं वाक्यबोधप्रमाः पृथक् ।**
**सत्यानृतव्यवस्थैवं युज्यतेऽर्थाप्त्यनाप्तिषु ॥ ८७ ॥**

वृत्तिः—बुद्धिश्च शब्दश्च तयोः प्रामाण्यमर्थप्रतिपादकत्वं बाह्यार्थे सति भवत्यसत्यविद्यमाने च न भवति । सत्यमवितथमनृतं वितथं तयोर्व्यवस्था अर्थस्याप्त्यनाप्तिषु अर्थग्रहणाग्रहणेषु सत्सु युज्यते नान्यथा । वचनस्य तदा सत्यता भवति यदा बाह्यार्थं तादृग्भूतं प्रापयति । अन्यथाऽसत्यम् ॥

तस्य बाह्यार्थस्य कथं प्राप्तिर्भवतीति पृष्टे कश्चिदाह दैवादेव, कश्चित्पुनः पौरुषादेवैतत्पक्षद्वयं विघटयन्नाह—

**दैवादेवार्थसिद्धिश्चेद्दैवं पौरुषतः कथम् ।**
**दैवतश्चेदनिर्मोक्षः पौरुषं निष्फलं भवेत् ॥ ८८ ॥**

वृत्तिः—अर्थस्य कार्यस्य प्रशस्ताप्रशस्तशरीरेन्द्रियादेस्तथा ज्ञानसुखादेरज्ञानदुःखादेर्वा सिद्धिर्निष्पत्तिर्यदि दैवादेव सर्वथा स्यात् तद्दैवं कर्माख्यं पौरुषान्मनोवाक्कायव्यापारलक्षणाच्छुभाशुभरागादिप्रायात्पुरुषकारात्तर्हि कथं

स्यात् । अथ दैवान्तरादेव दैवं स्यादित्यत्रोच्यते । दैवतश्चेद्यदि दैवादेव दैवं स्यात्तदानीमनिर्मोक्षोऽसिद्धिः स्यात् । दैवस्य कारणभूतस्य कार्यभूतस्य च सतत सन्ततितो विच्छेदं प्रत्युपायासम्भवात् तदा दानशीलप्रव्रज्यार्थ. कृष्याद्यर्थश्च पुरुषकारोऽप्यनर्थ स्यात् ॥

**पौरुषादेव सिद्धिश्चेत् पौरुषं दैवतः कथम् ।**
**पौरुषाच्चेदमोघं स्यात् सर्वप्राणिषु पौरुषम् ॥ ८९ ॥**

वृत्ति.—अथ पौरुषादेव सिद्धिश्चेत् सर्वथा यदि पौरुषमात्रादेवार्थसिद्धि स्यात् । तत्पौरुषं दैवाद्देवप्रामाण्यात्कथं सफलं स्यात् । तथाहि समानमेव सहमानानां केचिदर्थेषु युज्यन्ते केचिन्न प्रसिद्धमेतत् । अन्यथा दैवमन्तरेण पौरुषादेव पौरुषस्य प्रवृत्तौ सत्यां सर्वप्राणिषु पौरुषममोघमेव सफलमेव स्यात् दैवहीनानामपि तद्भवति ॥

उभयैकान्तेऽपि न युक्तम्—

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।**
**अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ९० ॥**

वृत्ति·—उभयदोषप्रसङ्गात् । अवाच्यत्वदोषाच्च ॥

दैवात्केवलात्पौरुषाच्च केवलादर्थसिद्धिर्यदि न भवति कथं तर्हि स्यादत आह—

**अबुद्धिपूर्वापेक्षायामिष्टानिष्टं स्वदैवत· ।**
**बुद्धिपूर्वव्यपेक्षायामिष्टानिष्टं स्वपौरुषात् ॥ ९१ ॥**

वृत्तिः—बुद्धिर्विचार· पूर्वं प्रथमं कारणं यस्याः सा तथा न बुद्धिपूर्वा अबुद्धिपूर्वा सा चासावपेक्षा च आलोचनं च सा तया तस्यामतर्कितोपस्थितन्यायेनेत्यर्थ । इष्टमभिलषितं सुखादि अनिष्टमनभिलषितं दु खादि । स्वदैवत स्वपुण्यपापफलात्पूर्वजन्मनिबद्धकर्मण । यद्यपि पौरुषमात्रं विद्यते तथापि मुख्याभावो विवक्षितो नात्यन्ताभाव· ॥ तथा बुद्धिपूर्वव्यपेक्षाया विचारपूर्वकत्वेनानुष्ठानादिष्टमनिष्टं च स्वपौरुषात्स्वकीयपुरुषकारात् । अत्रापि दै-

वमप्रधानत्वेन विवक्षितं नात्यन्ताभावत्वेन । परस्परापेक्षयैव कार्यसिद्धिर्यतो देव आत्मा तस्य कर्म दैवमिति ॥

ननु परदुःखे पाप तस्यैव सुखे पुण्य स्वदु खात्पुण्य स्वसुखात्पापमित्येवं कैश्चिदभाणि न दैवादिति तन्मतनिराकरणायाह—

**पापं ध्रुवं परे दुःखात् पुण्यं च सुखतो यदि ।**
**अचेतनाकषायौ च बध्येयातां निमित्ततः ॥ ९२ ॥**

वृत्तिः—परेऽन्यस्मिन्प्राणिनि दुःखमात्राद्यदि पाप स्यात् । तस्मिन्नेव सुखमात्राच्च पुण्य यदि स्यात्। तदानीमचेतनो विषशस्त्रादिरकषायो वीतरागः तावपि वध्येयाता कर्मबन्धस्य कर्तारौ भवतः। निमित्तत्वात् । प्रत्ययमन्तरेणापि भावप्रधानत्वान्निर्देशस्य ॥

तथा—

**पुण्यं ध्रुवं स्वतो दुःखात्पापं च सुखतो यदि ।**
**वीतरागो मुनिर्विद्वांस्ताभ्यां युञ्ज्यान्निमित्ततः ॥ ९३ ॥**

वृत्तिः—स्वस्मिन् दु.खात् ध्रुव निश्चित पुण्य यदि स्यात्तस्मिन्नेवात्मनि सुखाद्धेतोर्ध्रुव पापं च यदि स्यात् । ततः किं स्यात् । ताभ्या वीतरागो मुनिर्युञ्ज्याद्बद्धो भवेत् । कुतो निमित्तत्वात् ॥

अथोभयैकान्तस्तद्द्वयादिष्यते तत्रापि दोष एव विरोधात् । नाप्यवाच्यत्वं वचनविरोधात्—

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।**
**अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ९४ ॥**

वृत्तिः—सुगमम् ॥

कथ तर्हत आह—

**विशुद्धिसंक्लेशाङ्गं चेत् स्वपरस्थं सुखासुखम् ।**
**पुण्यपापास्रवौ युक्तौ न चेद्व्यर्थस्तवार्हतः ॥ ९५ ॥**

वृत्तिः—स्व आत्मा परोऽन्यस्तयोस्तिष्ठतीति स्वपरस्थ सुख चासुखं च

सुखासुख जीवप्रदेशाह्लादनानाह्लादन । विशुद्धि॰ प्रमोदादिशुभपरिणाम॰ । यद्यपि निरवशेषरागादिविरहलक्षणाया विशुद्धौ विशुद्धिशब्दो वर्तते तथापि कुशलशब्दवत् शुभपरिणामादौ वर्तमानो विशुद्धिशब्दो गृह्यते सङ्क्लेश आर्त-रौद्रध्याने तयोरङ्ग कारण विशुद्धिसङ्क्लेशाङ्गम् । चेद्यदि स्वपरस्थ सुखासुख विशुद्धिसङ्क्लेशालम्बन यदि भवति तदा पुण्य च पाप च तयोरास्रवौ युक्तौ । न चेदेव यद्येव न स्यात् । पुण्यास्रवः पापास्रवश्च व्यर्थो निष्फल. । अर्हतो वीतरागस्य तवेव वा शुष्ककुड्यनिपतितचूर्णमुष्टिवत् बन्धाभावात् । एतेन मस्करिपूरणमत निराकृत भवति । सिद्धेपु सङ्क्लेशकारणाभावात् ॥

*अथ पुण्यपापास्रवकारणमज्ञानमिष्यते चेत्तन्मतनिराकरणायाह—*

**अज्ञानाच्चेद्ध्रुवो बन्धो ज्ञेयानन्त्यान्न केवली ।**
**ज्ञानस्तोकाद्विमोक्षश्चेदज्ञानाद्बहुतोऽन्यथा ॥ ९६ ॥**

**वृत्तिः**—यद्यज्ञानाज्जाड्यस्वरूपाद्बन्धो ध्रुवो न केवली मुक्त. । कुतो ज्ञेयानन्त्यात्प्रमेयस्यानन्त्य यतः । अथ कदाचित् ज्ञानस्तोकाद्बोधनिर्ह्रासान्मोक्षोऽभ्युपगम्यते चेद्बहुतो विपुलादज्ञानादन्यथाऽन्येन प्रकारेणातिशयनेन विमोक्षः स्यादिति सम्बन्ध. । अथवा प्रागुक्तान्मोक्षप्रकारादन्येन प्रकारेणापि सह जन्मनो योगः स्यात् । तथा च सति न बन्धो नापि मोक्षस्तस्य विचाराक्षमत्वात् ॥

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।**
**अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ९७ ॥**

**वृत्ति**—उभयैकान्तावक्तव्यमपि दुष्ट विरोधात् ॥

कथ तर्हि तौ स्यातामत आह—

**अज्ञानान्मोहतो बन्धो नाज्ञानाद्वीतमोहत ।**
**ज्ञानस्तोकाच्च मोक्षः स्यादमोहान्मोहितोऽन्यथा ॥ ९८ ॥**

**वृत्तिः**—अज्ञानात्पुनरपि किं विशिष्टात् मोहतो मिथ्यात्वरूपाद्बन्धो भवति विनष्टमिथ्यात्वरूपादज्ञानात्पुनर्न बन्धो भवति ज्ञानस्तोकादपि मोक्षः स्याद्यमोहाद्भवेत् यदि पुनर्मोहितः स्यात्तस्य मोक्षाभाव एव ॥

अथ कदाचिन्मनुषे न दैवान्नापि पौरुषान्न ज्ञानान्नाप्यज्ञानात् किंतु ईश्वरप्रेरणादित्यस्य मतस्य निराकरणायाह—अथवा कामादीना कर्मणश्च वैचित्र्यमनादित्व च दर्शयितुमाह—

**कामादिप्रभवश्चित्रः कर्मबन्धानुरूपतः ।**
**तच्च कर्म स्वहेतुभ्यो जीवास्ते शुद्ध्यशुद्धितः ॥ ९९ ॥**

वृत्तिः—कामादीना रागादीना प्रभव उत्पाद· कार्यरूपश्चित्रो नानाप्रकार· । कर्मबन्धानुरूपत. ज्ञानावरणादिकर्मण· कारणाद्भवति । तच्च कर्म ज्ञानावरणादिक स्वहेतुभ्यो भवति कुत एतदनादिर्बन्धबन्धहेतुसन्तानो बीजाकुरवत् न पुनरीश्वरादेस्तस्यावस्तुत्वात् विरागाक्षमत्वेन । ते भगवतोऽर्हतो जीवा द्विप्रकारा· ससारिणः सन्ति । कुत· शुद्ध्यशुद्धितो भव्याभव्यशक्ते । अत एव न सर्वेषा मोक्ष. । एतेनान्यदपि मतान्तर निराकृत वेदितव्यम् ॥

शुद्ध्यशुद्धिस्वरूपप्रतिपादनायाह—

**शुद्ध्यशुद्धी पुनः शक्ती ते पाक्यापाक्यशक्तिवत् ॥**
**साद्यनादी तयोर्व्यक्ती स्वभावोऽतर्कगोचरः ॥ १०० ॥**

वृत्तिः— शुद्ध्यशुद्धी ये शक्ती भव्याभव्यत्वरूपे ते अनादितत्त्वार्थश्रद्धानाश्रद्धानयोग्यके कटुकेतरमुद्गपाक्यापाक्यशक्तिवत् तयोर्भव्यत्वाभव्यत्वशक्त्योर्व्यक्ती तत्त्वार्थश्रद्धानप्रियधर्मत्वादिपरिणत्यपरिणती साद्यनादी । कुतोऽय शक्तिभेदोऽतर्कगोचर. स्वभावो यत ॥

एव तावत्प्रमाणपरतन्त्रप्रमेयविचारः कृत. । अधुना प्रमाणतत्त्वनिरूपणार्थमाह—

**तत्त्वज्ञानं प्रमाणं ते युगपत्सर्वभासनम् ।**
**क्रमभावि च यज्ज्ञानं स्याद्वादनयसंस्कृतम् ॥ १०१ ॥**

वृत्तिः—तत्त्वज्ञान परार्थबोधः पुनरपि कथभूत युगपत्सर्वार्थमवभासत इति युगपत्सर्वभासनमक्रमेण परिच्छेदात्मकमित्यर्थः तत्प्रमाणमेव । क्रमभावि च यज्ज्ञान छद्मस्थस्य चक्षुरादिक चकारादक्रमभावि च दीर्घशष्कुल्यादिभक्षणे सम्भवात् सर्वथासदसदेकानेकनित्यानित्यादिसकलैकान्तप्रत्यनीकानेकान्ततत्त्व-

विषय स्याद्वादो जातियुक्तिनिबन्धनो वितर्को नयस्ताभ्या सस्कृत प्रमाणगोचर नीत तदपि प्रमाण स्याद्वादनयमस्कृत यतस्ते तव ॥

प्रमाणफल दर्शयन्नाह—

**उपेक्षा फलमाद्यस्य शेषस्यादानहानधीः ।**
**पूर्वं वाऽज्ञाननाशो वा सर्वस्यास्य स्वगोचरे ॥ १०२ ॥**

वृत्तिः— आद्यस्य प्रमाणस्य केवलज्ञानस्य फलमुपेक्षा रागमोहाभाव । शेपस्य प्रमाणस्य छद्मस्थीयज्ञानस्य, आदान ग्रहण हान त्यागस्तयोर्बुद्धि तत्फल पूर्वं वा उपेक्षेत्यर्थ । मामान्यापेक्षाया नपुसकलिङ्गता । पूर्वा वेति पाठान्तर वा । अज्ञाननाश फल सज्ञानतेत्यर्थ. । मर्वस्यास्य मत्यादिभेदभिन्नस्य हिताहितभेदभिन्ने स्वगोचरे स्वविषये वर्तमानस्यौत्सर्गिक फलमज्ञाननाश इत्युक्तम् ॥

प्रस्तुतस्याद्वादाख्यपरार्थसाधनसमर्थनार्थमाह—

**वाक्येष्वनेकान्तद्योती गम्यम्प्रतिविशेषकः ।**
**स्यान्निपातोऽर्थयोगित्वात्तव केवलिनामपि ॥ १०३ ॥**

वृत्तिः— पदाना परस्परापेक्षाणा निरपेक्षा समुदाया वाक्यानि तेपु वाक्येष्वनेकान्त द्योतयति प्रकटयतीति अनेकान्तद्योती । स्याच्छब्दो निपातोऽव्यय । गम्यमभिधेयमस्ति घट इत्यादिवाक्येऽस्तित्वादि तत्प्रतिविशेपक, समर्थक । अथवा गम्य हेयादेयभेदभिन्न वस्तु यथा यदवस्थित तथैव तस्य विशेपक । अर्थस्य तत्तदात्मकस्य योगित्व घटन तस्मादन्येपा पुनर्धर्माणा गुणीभूतत्वात् । तव भवत एतदुक्त केवलिना श्रुतकेवलिना च अपिशब्दात्तच्छिष्यप्रशिष्याणा च नान्येपा तथाभूतस्य वस्तुभावात् ॥

पुनरपि तदेव समर्थयति—

**स्याद्वादः सर्वथैकान्तत्यागात्किंवृत्तचिद्विधिः ।**
**सप्तभङ्गनयापेक्षो हेयादेयविशेपकः ॥ १०४ ॥**

वृत्ति.—स्याद्वादोऽर्थप्रकरणादीना घटादिशब्दार्थविशेपस्थापनहेतूनामनुकूल.। कुत सर्वथैकान्तत्यागात्तेपामर्थप्रकरणादीना प्रतिकूलस्यैकान्तस्य त्या-

गात् । अथ कथम्प्रकारः स्याद्वादः किंवृत्तचिद्विधिः किमो वृत्त किं निष्पन्न वृत्त किंवृत्त च तच्चिच्च किंवृत्तचित् तदेव विधिः प्रकारो यस्य कथञ्चित् कुतश्चिदित्यादि । सप्तभङ्गाश्च ते नयाश्च तानपेक्षत इति स्यादस्ति स्यान्नास्त्यादि । हेयादेययोर्विशेषकः गुणमुख्यकल्पनया ॥

स्याद्वादकेवलज्ञानयोः कथञ्चित्सामान्यं दर्शयन्नाह—

**स्याद्वादकेवलज्ञाने सर्वतत्त्वप्रकाशने ।**
**भेदः साक्षादसाक्षाच्च ह्यवस्त्वन्यतमं भवेत् ॥ १०५ ॥**

वृत्तिः— सर्वाणि च तानि तत्त्वानि च जीवाजीवादीनि तानि प्रकाशत इति सर्वतत्त्वप्रकाशने के ते स्याद्वादश्च केवलज्ञान च ते द्वे प्रमाणे । तयोर्मध्येऽन्यतम परैः परिकल्पितमवस्तु भवेद्यत. कथ तयोर्भेदः साक्षात्प्रत्यक्षादसाक्षादप्रत्यक्षात् ॥

प्रमाण चर्चितमथ को नयो नामेत्याह—

**सधर्मणैव साध्यस्य साधर्म्यादविरोधतः ।**
**स्याद्वादप्रविभक्तार्थविशेषव्यञ्जको नयः ॥ १०६ ॥**

वृत्तिः—समानो गुणो यस्य स सधर्मा तेन सधर्मणैव सपक्षेणैव एवकाराद्विपक्षनिराकरणं साध्यस्यानित्यत्वादे. शक्याभिप्रेताप्रसिद्धस्य । सधर्मणो भाव. साधर्म्यं तस्मात्साधर्म्यात् । स्याद्वाद श्रुतज्ञान तेन प्रविभक्तो विषयीकृतोऽर्थस्तस्य विशेषो नित्यत्वादिस्तद्व्यञ्जकः प्रकटको द्योतको नयो युक्तितोऽर्थपरिग्रह. । इत्यनेनान्वयव्यतिरेकपक्षधर्मा उक्ताः । अविरोधादित्यनेनान्यथानुपपत्त्येकलक्षणो हेतुः प्रदर्शित. । किमुक्त भवति— अन्तर्व्याप्तिमन्तरेण त्रिलक्षणो हेतुर्न गमक इति ॥ अथ को नयप्रमाणयोर्विशेषोऽनेकान्तप्रतिपत्तिः प्रमाण, एकधर्मप्रतिपत्तिर्नयः ॥

तद्विषयस्य द्रव्यस्य स्वरूपप्रतिपादनार्थमाह—

**नयोपनयैकान्तानां त्रिकालानां समुच्चयः ।**
**अविभ्राड्भावसम्बन्धो द्रव्यमेकमनेकधा ॥ १०७ ॥**

वृत्तिः— नया नैगमादयःसप्त उपनयास्तद्भेदोपभेदार्थपर्यायास्तएवैकान्ताः

प्रधानधर्मास्तद्ग्राह्यत्वात्तद्व्यपदेश । त्रय काला विषयो येषां ते तथाभूतास्तेषा समुच्चय एकस्मिन्नवस्थानम् । अविभ्राट् अपृथक् भावसम्बन्ध सत्तासम्बन्धो यस्य स तथाभूतस्तद्द्रव्यमेकमभेदापेक्षया भेदापेक्षया पुनरनेकप्रकारम् ॥

तदर्थं चोद्यपरिहारायाह—

**मिथ्यासमूहो मिथ्या चेन्न मिथ्यैकान्तताऽस्ति न॰ ।**
**निरपेक्षा नया मिथ्या सापेक्षा वस्तु तेऽर्थकृत् ॥ १०८ ॥**

वृत्तिः—नित्यानित्यास्तित्वादीना मिथ्याधर्माणा योऽय समूह॰ समुदाय स मिथ्याऽसत्यरूप इति चेदेव भवतोऽभिप्राय । मिथ्येत्येकान्त सग्रहस्तस्य भावो मिथ्यैकान्तता सा नोऽस्माक नास्ति न विद्यते । कुतो यतो निरपेक्षा नया मिथ्या परस्परमपेक्षा घटना तस्या निर्गताः पृथग्भूता धर्मा व्यलीका. । सापेक्षा. परस्परसम्बद्धास्ते नया वस्तु परमार्थतत्त्व यतोऽर्थकृत् क्रमाक्रमाभ्यामर्थकारित्वाद्‌तो न चोद्यस्यावतार. ॥

पुनरपि तमर्थं समर्थयन्नाह—

**नियम्यतेऽर्थो वाक्येन विधिना वारणेन वा ।**
**तथाऽन्यथा च सोऽवश्यमविशेष्यत्वमन्यथा ॥ १०९ ॥**

वृत्तिः—वाक्येन, अस्ति घटो नास्ति वेति विधिप्रतिषेधरूपेणार्थो नियम्यते नियन्त्र्यते विशेषविषय नीयते तस्मात्सोऽर्थस्तथा च तदतदात्मक इत्यभ्युपगन्तव्य । यदि पुनरन्यथाऽन्येन प्रकारेणैकान्तरूपेणाभ्युपगम्यते तदानीमविशेष्यत्वमवस्तुत्व स्यादेकधर्माक्रान्तत्वेन वस्त्वस्ति यतः ॥

वाक् द्विविषया न भवतीत्यस्य निराकरणायाह—

**तदतद्वस्तु वागेषा तदेवेत्यनुशासति ।**
**न सत्या स्यान्मृषावाक्यैः कथं तत्त्वार्थदेशना ॥ ११० ॥**

वृत्तिः—एषा वागेतद्वचन सर्वाभ्युपगत तच्चातच्च तदतत् अस्तित्वनास्तित्वात्मक वस्तुतत्त्व तदेव तादृग्भूतमेव नैकान्तात्मकमेवेत्येवमनुशासति कथयति प्रतिपादयति यदि न सत्या न सद्भूता स्याद्भवेत् । एव सति मृषावाक्यानि असत्यरूपाणि वाक्यानि स्यु । तथा सति तत्त्वार्थस्य परमार्थस्य

प्रमाणहेतुफलप्रतिपादकस्य येय देशना कथन परप्रतिपादनं कथं स्यात् किन्तु न भवेदेव। तथाच विशीर्णं प्रमाणादिलक्षण वर्त्म । तस्माद्यत्सत्तदनेकान्तात्मकं हेतुज्ञानं प्रमाणवदिति वचनस्य प्रामाण्यमेषितव्यम् ॥

पुनरपि वचोलक्षणमाह—

**वाक्स्वभावोऽन्यवागर्थप्रतिषेधनिरङ्कुशः ।**
**आह च स्वार्थसामान्यं तादृग्वाच्यं खपुष्पवत् ॥ १११ ॥**

वृत्तिः—वाच· स्वभाव आत्मीय रूपमन्येषा वाच्यत्वेनाभिप्रेततराणा वाग्वचन तस्या अर्थस्तस्य प्रतिषेधो निराकरण तस्मिन् निरङ्कुशः पटादीनां निराकरण करोति स्वार्थं च प्रतिपादयति अतोऽनेकान्तो, यदि पुन· सर्वथा स्वस्य ज्ञानार्थस्य बाह्यार्थस्य सामान्य परापररूपमपोह चार्वाक आह आचष्ट इत्यभ्युपगम स्यात् तादृगवाच्य विशेषरहित सामान्य खपुष्पवत् गगनकुसुमसमानमतो न किञ्चित्स्यात् ॥

ननु सामान्यमेव वचोऽर्थो यदुत विशेषे वर्तते सामान्येऽर्थक्रियाभावादिति मंसर्गबोधमत तन्निराकरणार्थमाह—

**सामान्यवाग्विशेषे चेन्न शब्दार्थो मृषा हि सा ।**
**अभिप्रेतविशेषाप्तेः स्यात्कारः सत्यलाञ्छनः ॥ ११२ ॥**

वृत्तिः—सामान्यसम्बन्धिनी वाक् विशेषे वर्तते विशेषमाचष्टे तत्त्वार्थ· क्रियाभावात् चेदेव भवतोऽभिप्राय. तर्हि शब्दस्यार्थोऽभिधेयः कुत तादृग्भूता वाक् मृषा अलीका सा । यस्मान्न ह्यन्यस्य वाचकोऽन्यमाह घटशब्द पटार्थ· स्य न कदाचिदपि प्रतिपादक· नाप्यपोहोऽस्यार्थोऽपोहो हि परव्यावृत्तिः सा च तुच्छा ततो भेदक्षणिकैकान्तपक्षे न वाच्य नापि वाचको नानुमान· नाप्यागम सर्वाभावोऽत स्यात्कारः स्याद्वाद सत्यलाञ्छन· सत्यभूतोऽभिप्रेतविशेषस्याप्तेर्निमित्तमिष्टार्थप्राप्तिहेतोराश्रयणीयः सर्वदोषकलङ्कातीतत्वात् ।

तस्यैव स्वरूपमाह—

**विधेयमीप्सितार्थाङ्गं प्रतिषेध्याविरोधि यत् ।**
**तथैवादेयहेयत्वमिति स्याद्वादसंस्थिति. ॥ ११३ ॥**

वृत्तिः—विधेयमस्तीत्यादि प्रतिषेध्यस्य नास्तित्वादेरविरोधेनाविरुद्ध यत्तदीप्सितार्थस्याभिप्रेतकार्यस्याङ्ग कारणम्। तथैवादेय वस्तु हेयात्त्याज्यादविरुद्धन् । इत्यनेन प्रकारेण स्याद्वादस्य सस्थिति सर्वप्रमाणैरविरुद्धा सिद्धिरिति प्रमाणहेतुदृष्टान्ताभासा परवादिपरिकल्पितप्रमाणहेतुदृष्टान्ता वेदितव्या । कुत स्तल्लक्षणाभावात् । वस्त्वपि तैर्यत्परिकल्पित तदपि नास्ति लक्षणाभावात् । तस्माद्यदनेकान्तात्मक तत्सत्य लक्षणयोगादिति ॥

शास्त्रार्थोपसंहारकारिकामाह—

**इतीयमाप्तमीमांसा विहिता हितमिच्छता ।**
**सम्यङ्मिथ्योपदेशार्थविशेषप्रतिपत्तये ॥ ११४ ॥**

वृत्ति.—इत्यनेन प्रकारेणेय प्रत्यक्षतश्च योऽयमुपदेशस्तस्यार्थ स्वरूप तस्य विशेषो याथात्म्य तस्य प्रतिपत्तिरवगमस्तस्यै सम्यगुपदेशोऽय मिथ्येति सर्वज्ञेन ज्ञायते यस्मात् ॥

कृतकृत्यो निर्व्यूढतत्त्वप्रतिज्ञ आचार्य श्रीमत्समन्तभद्रकेसरी प्रमाणनयतीक्ष्णनखरदंष्ट्राविदारितप्रवादिकुनयमदविह्वलकुम्भिकुम्भस्थलपाटनपटुरिदमाह—

**जयति जगति क्लेशावेशप्रपञ्चहिमांशुमान्**
**विहतविषमैकान्तध्वान्तप्रमाणनयांशुमान् ।**
**यतिपतिरजो यस्याधृष्टान्मताम्बुनिधेर्लवान्**
**स्वमतमतयस्तीर्थ्या नाना परे समुपासते ॥ ११५ ॥**

वृत्तिः—यस्य भट्टारकस्य मताम्बुधेरागमोदधेर्लवान् कणान् अधृष्टानखरीकृतान् परे नाना तीर्थ्या प्रवादिन· सुगतादय स्वमते मतिर्येषा ते स्वमतमतय· कृतात्मबुद्धय समुपासते सेवन्ते सोऽजो जातिजरामरणरहितो यतिपति प्रधानस्वामी जयति त्रैलोक्यस्वामित्व करोति बाह्याभ्यन्तरशत्रून् निहत्य जयति लोके । पुनरपि किंविशिष्ट. क्लेशस्य दु.खस्यावेश· कदर्थना तस्य प्रपञ्चो विस्तारः स एव हिम प्रालेय तस्यांशुमानादित्य । एकान्त एव ध्वान्त तम. विषम च तदेकान्तध्वान्त च विषमैकान्तध्वान्त प्रमाण च नयाश्च प्रमाणनया उक्तलक्षणा विहत निराकृत विषमैकान्तध्वान्त यैस्ते

तथाभूतास्ते च ते प्रमाणनयाश्च त एवांशवः किरणास्ते विद्यन्ते यस्य स तथाभूत इति यतिपतेर्विशेषणम् ॥

श्रीमत्समन्तभद्राचार्यस्य त्रिभुवनलब्धजयपताकस्य प्रमाणनयचक्षुषः स्याद्वादशरीरस्य देवागमाख्यायाः कृतेः संक्षेपभूतं विवरणं कृतं श्रुतविस्मरणशीलेन वसुनन्दिना जडमतिनाऽऽत्मोपकाराय ॥

समन्तभद्रदेवाय परमार्थविकल्प (लिप) ने ।
समन्तभद्रदेवाय नमोऽस्तु परमात्मने ॥ १ ॥
सुखाय जायते लोके वसुनन्दिसमागमः ॥
तस्मात् विसेव्यतां भव्यैर्वसुनन्दिसमागमः ॥ २ ॥

इति श्रीवसुनन्द्याचार्यकृता देवागमवृत्तिः समाप्ता ।

ॐ

# अथ समन्तभद्रस्वामिविरचितं

# युक्त्यनुशासनम् ।

---

( १२ )

कीर्त्या महत्या भुवि वर्द्धमानं त्वां वर्द्धमानं स्तुतिगोचरत्वं ।
निनीषवः स्मो वयमद्य वीरं विशीर्णदोषाशयपाशबन्धम् ॥ १ ॥
याथात्म्यमुल्लङ्घ्य गुणोदयाख्या लोके स्तुतिर्भूरिगुणोदधेस्ते ।
अणिष्ठमप्यंशमशक्नुवन्तो वक्तुं जिन त्वां किमिव स्तुयाम ॥ २ ॥
तथापि वैयात्यमुपेत्य भक्त्या स्तोताऽस्मि ते शक्त्यनुरूपवाक्यः ।
इष्टे प्रमेयेऽपि यथास्वशक्ति किन्नोत्सहन्ते पुरुषाः क्रियाभिः ॥ ३ ॥
त्वं शुद्धिशक्त्योरुदयस्य काष्ठां तुलाव्यतीतां जिन शान्तिरूपां ।
अवापिथ ब्रह्मपथस्य नेता महानितीयत्प्रतिवक्तुमीशाः ॥ ४ ॥
कालः कलिर्वा कलुषाशयो वा श्रोतुः प्रवक्तुर्वचनानयो वा ।
त्वच्छासनैकाधिपतित्वलक्ष्मीप्रभुत्वशक्तेरपवादहेतुः ॥ ५ ॥
दयादमत्यागसमाधिनिष्ठं नयप्रमाणप्रकृताञ्जसार्थं ।
अधृष्यमन्यैरखिलैः प्रवादैर्जिन त्वदीयं मतमद्वितीयं ॥ ६ ॥
अभेदभेदात्मकमर्थतत्वं तव स्वतन्त्रान्यतरत् खपुष्पम् ।
अवृत्तिमत्वात्समवायवृत्तेः संसर्गहानेः सकलार्थहानिः ॥ ७ ॥
भावेषु नित्येषु विकारहानेर्न कारकव्यापृतकार्ययुक्तिः ।
न बन्धभोगौ न च तद्विमोक्षः समन्तदोषं मतमन्यदीयं ॥ ८ ॥
अहेतुकत्व प्रथितः स्वभावस्तस्मिन् क्रियाकारकविभ्रमः स्यात् ।
आबालसिद्धेर्विविधार्थसिद्धिर्वादान्तरं किं तदसूयतां ते ॥ ९ ॥
येषामवक्तव्यमिहात्मतत्वं देहादनन्यत्वपृथक्त्वक्लृप्तेः ।

तेषां ज्ञतत्वेऽनवधार्यतत्वे का बन्धमोक्षस्थितिरप्रमेये ॥ १० ॥
हेतुर्न दृष्टोऽत्र न चाऽप्यदृष्टो योऽयं प्रवादः क्षणिकात्मवादः ।
न ध्वस्तमन्यत्र भवेद्द्वितीये संतानभिन्ने नहि वासनाऽस्ति ॥ ११ ॥
तथा न तत्कारणकार्यभावा निरन्वयाः केन समानरूपाः ।
असत् खपुष्पं नहि हेत्वपेक्षं दृष्टं न सिद्ध्यत्युभयोरसिद्धम् ॥ १२ ॥
नैवास्ति हेतुः क्षणिकात्मवादे न सन्नसन्वा विभवादकस्मात् ।
नाशोदयैकक्षणता च दृष्टा सन्तानभिन्नक्षणयोरभावात् ॥ १३ ॥
कृतप्रणाशाकृतकर्मभोगौ स्यातामसंचेतितकर्म च स्यात् ।
आकस्मिकेऽर्थे प्रलयस्वभावो मार्गो न युक्तो वधकश्च न स्यात् ॥ १४ ॥
न बन्धमोक्षौ क्षणिकैकसंस्थौ न संवृतिः साऽपि मृषास्वभावा ।
मुख्यादृते गौणविधिर्न दृष्टो विभ्रान्तदृष्टिस्तव दृष्टितोऽन्या ॥ १५ ॥
प्रतिक्षणं भङ्गिषु तत्पृथक्त्वान्न मातृघाती स्वपतिः स्वजाया ।
दत्तग्रहो नाधिगतस्मृतिर्न न क्त्वार्थसत्यं न कुलं न जातिः ॥ १६ ॥
न शास्तृशिष्यादिविधिव्यवस्था विकल्पबुद्धिर्वितथाऽखिला चेत् ।
अतत्त्वतत्त्वादिविकल्पमोहे निमज्जतां वीतविकल्पधीः का ॥ १७ ॥
अनर्थिका साधनसाध्यधीश्चेद्विज्ञानमात्रस्य न हेतुसिद्धिः ।
अथार्थवत्त्वं व्यभिचारदोषो न योगिगम्यं परवादिसिद्धम् ॥ १८ ॥
तत्त्वं विशुद्धं सकलैर्विकल्पैर्विश्वाभिलापास्पदतामतीतं ।
न स्वस्य वेद्यं न च तन्निगद्यं सुषुप्त्यवस्थं भवदुक्तिबाह्यं ॥ १९ ॥
मूकात्मसंवेद्यवदात्मवेद्यं तन्म्लिष्टभाषाप्रतिमप्रलापं ।
अनङ्गसंज्ञं तदवेद्यमन्यैः स्यात्त्वद्विषां वाच्यमवाच्यतत्त्वं ॥ २० ॥
अशासदञ्जांसि वचांसि शास्ता शिष्याश्च शिष्टा वचनैर्न ते तैः ।
अहो इदं दुर्गतमं तमोऽन्यत् त्वया विना श्रायसमार्य किं तत् २१
प्रत्यक्षबुद्धिः क्रमते न यत्र तल्लिङ्गगम्यं न तदर्थलिङ्गम् ।
वाचो न वा तद्विषयेण योगः का तद्गतिः कष्टमशृण्वतां ते ॥ २२ ॥
रागाद्यविद्याऽनलदीपनं च विमोक्षविद्यामृतशासनं च ।

न भिद्यते संवृतिवादिवाक्यं भवत्प्रतीपं परमार्थशून्यं ॥ २३ ॥
विद्याप्रसूत्यै किल शील्यमाना भवत्यविद्या गुरुणोपदिष्टा ।
अहो त्वदीयोक्त्यनभिज्ञमोहो यज्जन्मने यत्तदजन्मने तत् ॥ २४ ॥
अभावमात्रं परमार्थवृत्तेः सा संवृतिः सर्वविशेषशून्या ।
तस्या विशेषौ किल बन्धमोक्षौ हेत्वात्मनेति त्वदनाथवाक्यं॥२५॥
व्यतीतसामान्यविशेषभावाद्विश्वाभिलापार्थविकल्पशून्य ।
खपुष्पवत् स्यादसदेव तत्त्वं प्रबुद्धतत्त्वाद्भवतः परेषां ॥ २६ ॥
अतत्स्वभावेऽप्यनयोरुपायाद्गतिर्भवेत्तौ वचनीयगम्यौ ।
सम्बन्धिनौ चेन्न विरोधि दृष्टं वाच्यं यथार्थं न च दूषणं तत् ॥२७॥
उपेयतत्त्वानभिलाप्यतावदुपायतत्त्वानभिलाप्यता स्यात् ।
अशेषतत्त्वानभिलाप्यतायां द्विषां भवद्युक्त्यभिलाप्यतायाः ॥ २८ ॥
अवाच्यमित्यत्र च वाच्यभावादवाच्यमेवेत्ययथाप्रतिज्ञम् ।
स्वरूपतश्चेत्पररूपवाचि स्वरूपवाचीति वचो विरुद्ध ॥ २९ ॥
सत्यानृतं वाप्यनृतानृतं वाप्यस्तीह किं वस्त्वतिशायनेन ।
युक्तं प्रतिद्वंद्व्यनुबन्धिमिश्रं न वस्तु तादृक्त्वदृते जिनेदृक् ॥ ३० ॥
सहक्रमाद्वा विषयाल्पभूरिभेदेऽनृतं भेदि न चात्मभेदात् ।
आत्मान्तरं स्याद्भिदुरं समं च स्याच्चानृतात्मानभिलाप्यता च ॥३१॥
न सच्च नासच्च न दृष्टमेकमात्मान्तरं सर्वनिषेधगम्यं ।
दृष्टं विमिश्रं तदुपाधिभेदात् स्वप्नेऽपि नैतत्त्वदृषेः परेषां ॥ ३२ ॥
प्रत्यक्षनिर्देशवदप्यसिद्धमकल्पकं ज्ञापयितुं ह्यशक्यं ।
विना च सिद्धेर्न च लक्षणार्थो न तावकद्वेषिणि वीर सत्य ॥ ३३ ॥
कालान्तरस्थे क्षणिके ध्रुवे वाऽपृथक्पृथक्त्वावचनीयतायां ।
विकारहानेर्न च कर्तृकार्ये वृथा श्रमोऽयं जिन विद्विषां ते ॥३४॥
मद्याङ्गवद्भूतसमागमे ज्ञः शक्त्यन्तरव्यक्तिरदैवसृष्टिः ।
इत्यात्मशिश्नोदरपुष्टितुष्टैर्निर्ह्रीभयैर्हा मृदवः प्रलब्धाः ॥ ३५ ॥
दृष्टेऽविशिष्टे जननादिहेतौ विशिष्टता का प्रतिसत्त्वमेषां ।

स्वभावतः किं न परस्य सिद्धिरतावकानामपि हा प्रपातः ॥ ३६ ॥
स्वच्छन्दवृत्तेर्जगतः स्वभावादुच्चैरनाचारपथेष्वदोषं ।
निर्घुष्य दीक्षासममुक्तिमानास्त्वदृष्टिबाह्या बत विभ्रमंति ॥ ३७ ॥
प्रवृत्तिरक्तैः शमतुष्टिरिक्तैरुपेत्य हिंसाऽभ्युदयाङ्गनिष्ठा ।
प्रवृत्तितः शान्तिरपि प्ररूढं तमः परेषां तव सुप्रभातं ॥ ३८ ॥
शीर्षोपहारादिभिरात्मदुःखैर्देवान्किलाराध्य सुखाभिगृद्धाः ।
सिध्यन्ति दोषापचयानपेक्षा युक्तं च तेषां त्वमृषिर्न येषां ॥ ३९ ॥
स्तोत्रे युक्त्यनुशासने जिनपतेर्वीरस्य निःशेषतः
संप्राप्तस्य विशुद्धिशक्तिपदवीं काष्ठां परामाश्रितां ।
निर्णीतं मतमद्वितीयममलं संक्षेपतोऽपाकृतं
तद्बाह्यं वितथं मतं च सकलं सद्धीधनैर्बुध्यतां ॥ ४० ॥
सामान्यनिष्ठा विविधा विशेषाः पदं विशेषान्तरपक्षपाति ।
अन्तर्विशेषान्तरवृत्तितोऽन्यत् सामान्यभावं नयते विशेषं ॥ ४१ ॥
यदेवकारोपहितं पदं तदस्वार्थतः स्वार्थमवच्छिनत्ति ।
पर्यायसामान्यविशेषसर्वं पदार्थहानिश्च विरोधिवत्स्यात् ॥ ४२ ॥
अनुक्ततुल्यं यदनेवकारं व्यावृत्त्यभावान्नियमद्वयेऽपि ।
पर्यायभावेऽन्यतराप्रयोगस्तत्सर्वमन्यच्युतमात्महीनं ॥ ४३ ॥
विरोधि चाऽभेद्यविशेषभावात् तद्द्योतनः स्याद्गुणतो निपातः ।
विपाद्यसन्धिश्च तथाङ्गभावात् अवाच्यताश्रायसलोपहेतुः ॥ ४४ ॥
तथा प्रतिज्ञाशयतो प्रयोगः सामर्थ्यतो वा प्रतिषेधयुक्तिः ।
इति त्वदीया जिन नागदृष्टिः पराप्रधृष्या परधर्षिणी च ॥ ४५ ॥
विधिर्निषेधोऽनभिलाप्यता च त्रिरेकशस्त्रिद्विश एक एव ।
त्रयो विकल्पास्तव सप्तधामी स्याच्छब्दनेयाः सकलेऽर्थभेदे ॥४६॥
स्यादित्यपि स्याद्गुणमुख्यकल्पैकान्तो यथोपाधिविशेषवीक्ष्यः।
तत्त्वं त्वनेकान्तमशेषरूपं द्विधाभवार्थव्यवहारवत्त्वात् ॥ ४७ ॥
न द्रव्यपर्यायपृथग्व्यवस्थाद्वैयात्म्यमेकार्पणया विरुद्धं ।

धर्मश्च धर्मी च मिथस्त्रिधेमौ न सर्वथा तेऽभिमतौ विरुद्धौ ॥४८॥
दृष्टागमाभ्यामविरुद्धमर्थप्ररूपण युक्त्यनुशासन ते ।
प्रतिक्षणं स्थित्युदयव्ययात्मतत्त्वव्यवस्थं सदिहार्थरूपं ॥ ४९ ॥
नानात्मतामप्रजहत्तदेकमेकात्मतामप्रजहच्च नाना ।
अङ्गाङ्गिभावात्तव वस्तु तद्यत् क्रमेण वाग्वाच्यमनन्तरूपं ॥ ५० ॥
मिथोऽनपेक्षाः पुरुषार्थहेतुर्नांशा न चांशी पृथगस्ति तेभ्यः।
परस्परेक्षाः पुरुषार्थहेतुर्दृष्टा नयास्तद्वदसि क्रियायां ॥ ५१ ॥
एकान्तधर्माभिनिवेशमूला रागादयोऽहंकृतिजा जनानां ।
एकान्तहानाच्च स यत्तदेव स्वाभाविकत्वाच्च समं मनस्ते ॥ ५२ ॥
प्रमुच्यते च प्रतिपक्षदूषी जिन त्वदीयैः पटुसिंहनादैः ।
एकस्य नानात्मतयाऽज्ञवृत्तेस्तौ बन्धमोक्षौ स्वमतादबाह्यौ ॥ ५३ ॥
आत्मान्तराभावसमानता न वागास्पदं स्वाश्रयभेदहीना ।
भावस्य सामान्यविशेषवत्त्वादैक्ये तयोरन्यतरन्निरात्म ॥ ५४ ॥
अमेयमश्लिष्टममेयमेव भेदेऽपि तद्वृत्त्यपवृत्तिभावात् ।
वृत्तिश्च कृत्स्नांशविकल्पतो न मानं च नानन्तसमाश्रयस्य ॥ ५५ ॥
नानासदेकात्मसमाश्रयं चेदन्यत्वमद्विष्टमनात्मनोः क्व ।
विकल्पशून्यत्वमवस्तुनश्चेत्तस्मिन्नमेये क्व खलु प्रमाणं ॥ ५६ ॥
व्यावृत्तिहीनान्वयतो न सिद्ध्येद्विपर्ययेऽप्यद्वितयेऽपि साध्यं ।
अतद्व्युदासाभिनिवेशवादः पुराभ्युपेतार्थविरोधवादः ॥ ५७ ॥
अनात्मनानात्मगतेरयुक्तिर्वस्तुन्ययुक्तेर्यदि पक्षसिद्धिः ।
अवस्तुयुक्तेः प्रतिपक्षसिद्धिर्न च स्वयं साधनरिक्तसिद्धिः ॥ ५८ ॥
निशापितस्तैः परशुः परघ्नः स्वमूर्ध्नि निर्भेदभयानभिज्ञैः ।
वैतण्डिकैर्यैः कुसृतिः प्रणीता मुने भवच्छासनदृक्प्रमूढैः ॥ ५९ ॥
भवत्यभावोऽपि च वस्तुधर्मो भावान्तरं भाववदर्हतस्ते ।
प्रमीयते च व्यपदिश्यते च वस्तुव्यवस्थाङ्गममेयमन्यत् ॥ ६० ॥
विशेषसामान्यविषक्तभेदविधिव्यवच्छेदविधायि वाक्यं ।

अभेदबुद्धेरविशिष्टता स्याद्व्यावृत्तिबुद्धेश्च विशिष्टता ते ॥ ६१ ॥

सर्वान्तवत्तद्गुणमुख्यकल्पं सर्वान्तशून्यं च मिथोऽनपेक्षं ।
सर्वापदामन्तकरं निरन्तं सर्वोदयं तीर्थमिदं तवैव ॥ ६२ ॥

कामं द्विषन्नप्युपपत्तिचक्षुः समीक्षतां ते समदृष्टिरिष्टं ।
त्वयि ध्रुवं खण्डितमानशृङ्गो भवत्यभद्रोऽपि समन्तभद्रः ॥ ६३ ॥

न रागान्नः स्तोत्रं भवति भवपाशच्छिदि मुनौ
न चान्येषु द्वेषादपगुणकथाभ्यासखलता ।
किमु न्यायान्यायप्रकृतगुणदोषज्ञमनसां
हितान्वेषोपायस्तव गुणकथासङ्गगदितः ॥ ६४ ॥

इति स्तुत्यः स्तुत्यैस्त्रिदशमुनिमुख्यैः प्रणिहितैः
स्तुतः शक्त्या श्रेयःपदमधिगतस्त्वं जिन मया ।
महावीरो वीरो दुरितपरसेनाभिविजये
विधेया मे भक्तिः पथि भवत एवाप्रतिनिधौ ॥ ६५ ॥

स्थेयाज्जातजयध्वजाप्रतिनिधिः प्रोद्भूतभूरिप्रभुः
प्रध्वस्ताखिलदुर्नयद्विपदिभः सन्नीतिसामर्थ्यतः ।
सन्मार्गस्त्रिविधः कुमार्गमथनोऽर्हन्वीरनाथः श्रिये
शश्वत्संस्तुतिगोचरोऽनघधियां श्रीसत्यवाक्याधिपः ॥ १ ॥

श्रीमद्वीरजिनेश्वरामलगुणस्तोत्रं परीक्षेक्षणैः
साक्षात्स्वामिसमन्तभद्रगुरुभिस्तत्त्वं समीक्ष्याखिलं ।
प्रोक्तं युक्त्यनुशासनं विजयिभिः स्याद्वादमार्गानुगै-
र्विद्यानन्दबुधैरलंकृतमिदं श्रीसत्यवाक्याधिपैः ॥ २ ॥

इति श्रीसमन्तभद्रस्वामिविरचित युक्त्यनुशासनं समाप्तम् ।

---

१ " अर्चितैः इत्यपि पाठः" ।

# अथ नयविवरणम्[1] ॥

( १३ )

सूत्रे नामादिनिक्षिप्ततत्त्वार्थाधिगम स्थितः ।
कार्त्स्न्यतो देशतो वापि सप्रमाणनयैरिह ॥ १ ॥
प्रमाणं च नयाश्चेति द्वन्द्वे पूर्वनिपातनम् ।
कृतं प्रमाणशब्दस्याभ्यर्हितत्वेन बह्वचः ॥ २ ॥
प्रमाण सकलादेशि नयादभ्यर्हित मतम् ।
विकलादेशिनस्तस्य वाचकोऽपि तथोच्यते ॥ ३ ॥
स्वार्थनिश्चायकत्वेन प्रमाण नय इत्यसत् ।
स्वार्थैकदेशनिर्णीतिलक्षणो हि नयः स्मृतः ॥ ४ ॥
स्वार्थांशस्यापि वस्तुत्वे तत्परिच्छेदको नयः ।
प्रमाणमन्यथा मिथ्याज्ञानं प्राप्तः स इत्यसत् ॥ ५ ॥
नाय वस्तु न चावस्तु वस्त्वशः कथ्यते यत. ।
नासमुद्र' समुद्रो वा समुद्रांशो यथोच्यते ॥ ६ ॥
तन्मात्रस्य समुद्रत्वे शेषांशस्यासमुद्रता ।
समुद्रबहुता वा स्यात्तत्वे क्वास्तु समुद्रवित् ॥ ७ ॥
तत्रांशिन्यपि नि.शेषधर्माणां गुणता गतौ ।
द्रव्यार्थिकनयस्यैव व्यापारान्मुख्यरूपत. ॥ ८ ॥
धर्मिधर्मसमूहस्य प्राधान्यार्पणया विद. ।
प्रमाणत्वेन निर्णीते. प्रमाणादपरो नयः ॥ ९ ॥
नाप्रमाण प्रमाण वा नयो ज्ञानात्मको यतः ।
स्यात्प्रमाणैकदेशस्तु सर्वथाप्यविरोधतः ॥ १० ॥

---

१ अस्य ग्रन्थस्य कर्तुर्नाम कुत्रापि नोपलभ्यते ।

प्रमाणेन गृहीतस्य वस्तुनोंऽशे विगानतः ।
संप्रत्ययनिमित्तत्वात्प्रमाणाच्चेन्नयोर्जि( र्चि )तः ॥ ११ ॥
नाशेषवस्तुनिर्णीतेः प्रमाणादेव कस्यचित् ।
तादृक्सामर्थ्यशून्यत्वात्सन्नयस्यास्ति सर्वथा ॥ १२ ॥
मतेरवधितो वापि मनःपर्ययतोऽपि वा ।
ज्ञातस्यार्थस्य नांशेऽस्ति नयानां वर्तनं ननु ॥ १३ ॥
निःशेषदेशकालार्था गोचरत्वविनिश्चयात् ।
तस्येति भाषितं कैश्चिद्युक्तमेव तथेष्टितः ॥ १४ ॥
त्रिकालगोचराशेषपदार्थांशेषु वृत्तितः ।
केवलज्ञानमूलत्वमपि तेषां न युज्यते ॥ १५ ॥
परोक्षपरतावृत्तेः स्पष्टत्वात्केवलस्य तु ।
श्रुतमूला नयाः सिद्धाः वक्ष्यमाणाः प्रमाणवत् ॥ १६ ॥
निर्दिश्याधिगमोपायं प्रमाणमधुना नयान् ।
व्याख्यातुं नैगमेत्यादि प्राह संक्षेपतोऽखिलान् ॥ १७ ॥
सामान्यादेशतस्तावदेक एव नयः स्थितः ।
स्याद्वादप्रविभक्तार्थविशेषव्यञ्जकात्मकः ॥ १८ ॥
संक्षेपाद्वौ विशेषेण द्रव्यपर्यायगोचरौ ।
द्रव्यार्थो व्यवहारान्तः पर्यायार्थस्ततोऽपरः ॥ १९ ॥
विस्तरेण तु सप्तैते विज्ञेया नैगमादयः ।
तथातिविस्तरेणैतद्भेदाः संख्यातविग्रहा ॥ २० ॥
नयो नयौ नयाश्चेति वाक्यभेदेन योजिताः ।
नैगमादय इत्येवं सर्वसंख्याभिसूचनात् ॥ २१ ॥
निरुक्त्या लक्षणं लक्ष्यं तत्सामान्यविशेषतः ।
नीयते गम्यते येन श्रुतार्थांशः स नो नयः ॥ २२ ॥

१ "नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूता नयाः" (तत्त्वार्थाधिगमे शास्त्रे. )

तदंशौ द्रव्यपर्यायलक्षणौ सव्यपेक्षणौ ।
नीयेते तुर्यकाभ्यां तु तौ नयाविति निश्चितौ ॥२३॥
गुणः पर्यय एवात्र सहभावी विभावितः ।
इति तद्गोचरो नान्यस्तृतीयोऽस्ति गुणार्थकः ॥२४॥
प्रमाणगोचरार्थांशा नीयन्ते यैरनेकधा ।
ते नया इति विख्याता ज्ञाता मूलनयद्वयात् ॥ २५ ॥
द्रव्यपर्यायसामान्यविशेषपरिबोधकाः ।
न मूलं नैगमादीनां नयाश्चत्वार एव तु ॥ २६ ॥
सामान्यस्य पृथक्त्वेन द्रव्यादनुपपत्तितः ।
सादृश्यपरिणामस्य तथा व्यञ्जनपर्ययात् ॥ २७ ॥
वैसादृश्यविवर्त्तस्य विशेषस्य च पर्यये ।
अन्तर्भावाद्विभाव्येते द्वौ तन्मूलनयाविति ॥ २८ ॥
नामादयोऽपि चत्वारस्तन्मूलं नेत्यतो गतम् ।
द्रव्यक्षेत्रादयस्तेषां द्रव्यपर्यायगत्वतः ॥ २९ ॥
भवान्विता न पञ्चैते स्कन्धा वा कीर्त्तिताः परैः ।
रूपादयो त एवेह तेऽपि हि द्रव्यपर्ययौ ॥ ३० ॥
तथा द्रव्यगुणादीनां षोढात्वं न व्यवस्थितम् ।
षट् स्युर्मूलनया येन द्रव्यपर्यायगा हि ते ॥ ३१ ॥
ये प्रमाणादयो भावाः प्रधानादय एव वा ।
ते नैगमादिभेदानामर्थानां परनीतय ॥ ३२ ॥
तत्र संकल्पमात्रस्य ग्राहको नैगमो नयः ।
सोपाधिरित्यशुद्धस्य द्रव्यार्थस्याभिदा मतः ॥ ३३ ॥
सकल्पो नैगमस्तत्र भवोऽयं तत्प्रयोजन. ।
यथा प्रस्थादिसकल्पस्तदभिप्राय इष्यते ॥ ३४ ॥
नन्वयं भाविनीं सज्ञां समाश्रित्योपचर्य्यते ।
अप्रस्थादिषु तद्भावस्तन्दुलेष्वोदनादिवत् ॥ ३५ ॥

इत्यसद्बहिरर्थेषु तथानध्यवसानतः ।
स्ववेद्यमानसंकल्पे सत्येवास्य प्रवृत्तितः ॥ ३६ ॥
यद्वा नैकं गमो योऽत्र स सतां नैगमो मतः ।
धर्मयोर्धर्मिणोर्वापि विवक्षा धर्मधर्मिणोः ॥ ३७ ॥
प्रमाणात्मक एवायमुभयग्राहकत्वतः ।
इत्ययुक्तमिह ज्ञप्तेः प्रधानगुणभावतः॥ ३८ ॥
प्राधान्येनोभयात्मानमर्थं गृह्णद्धि वेदनम् ।
प्रमाणं नान्यदित्येतत्प्रपञ्चेन निवेदितम् ॥ ३९ ॥
संग्रहे व्यवहारे वा नान्तर्भावनमीक्ष्यते ।
नैगमस्य तयोरेकवस्त्वंशप्रवणत्वतः ॥ ४० ॥
नर्जुसूत्रादिषु प्रोक्तहेतोरेवेति षण्णयाः ।
संग्रहादय एवेह न वाच्याः प्रपरीक्षकैः ॥ ४१ ॥
सप्तैवेते तु युज्यन्ते नैगमस्य नयत्वतः ।
तस्य त्रिभेदताख्यानात्कैश्चिदुक्ता नया नव ॥ ४२ ॥
तत्र पर्यायगस्त्रेधा नैगमो द्रव्यगो द्विधा ।
द्रव्यपर्य्यायगः प्रोक्तश्चतुर्भेदो ध्रुवं बुधैः ॥ ४३ ॥
अर्थपर्याययोस्तावद्गुणमुख्यस्वभावतः ।
क्वचिद्वस्तुन्यभिप्रायः प्रतिपत्तुः प्रजायते ॥ ४४ ॥
यथा प्रतिक्षणध्वंसिसुखसंविच्छरीरिणि ।
इति सातार्थपर्यायो विशेषणतया गुणः ॥ ४५ ॥
संवेदनार्थपर्यायो विशेष्यत्वेन मुख्यताम् ।
प्रतिगच्छन्नभिप्रेतो नान्यथैवं वचो गतिः ॥ ४६ ॥
सर्वथा सुखसंवित्त्योर्नानात्वेऽभिमतिः पुनः ।
स्वाश्रयाच्चार्थपर्यायनैगमाभोऽप्रतीतित ॥ ४७ ॥
कश्चिद्व्यञ्जनपर्यायौ विषयीकुरुतेऽञ्जसा ।
गुणप्रधानभावेन धर्मिण्येकत्र नैगमः ॥ ४८ ॥

सच्चैतन्यं न रीत्येवं सत्त्वस्य गुणभावतः ।
प्रधानभावतश्चापि चैतन्यस्याभिसन्धितः ॥ ४९ ॥
तयोरत्यन्तभेदोक्तिरन्योऽन्यं स्वाश्रयादपि ।
ज्ञेयो व्यञ्जनपर्यायनैगमाभोऽविरोधतः ॥ ५० ॥
अर्थव्यञ्जनपर्य्यायौ गोचरीकुरुते परः ।
धार्मिके सुखजीवत्वमित्येवमनुरोधतः ॥ ५१ ॥
भिन्ने तु सुखजीवत्वे योऽभिमन्येत सर्वथा ।
सोऽर्थव्यञ्जनपर्यायनैगमाभास एव नः ॥ ५२ ॥
शुद्धं द्रव्यमशुद्धं च तथाभिप्रैति यो नयः।
स तन्नैगम एवेह सग्रहव्यवहारजः ॥ ५३ ॥
स द्रव्यं सकलं वस्तु तथान्वयविनिश्चयात् ।
इत्येवमवगन्तव्यस्तद्भेदोक्तिस्तु दुर्नयः ॥ ५४ ॥
वस्तुपर्यायवद्द्रव्यं गुणवद्वेति निर्णय ।
व्यवहारनयाज्जातः सोऽशुद्धद्रव्यनैगमः ॥ ५५ ॥
तद्भेदैकान्तवादस्तु तदाभासोऽनुमन्यते ।
तथोक्तेर्बहिरन्तश्च प्रत्यक्षादिविरोधतः ॥ ५६ ॥
शुद्धद्रव्यार्थपर्यायनैगमोऽस्ति परो यथा ।
सत्सुख क्षणिक सिद्धं संसारेऽस्मिन्नितीरणम् ॥ ५७ ॥
सत्त्वं सुखार्थपर्यायाद्भिन्नमेवेति सम्मतिः ।
दुर्नीतिः स्यात्सबाधत्वादिति नीतिविदो विदुः ॥ ५८ ॥
क्षणमेकं सुखी जीवो विपयीति विनिश्चयः ।
विनिर्दिष्टोऽर्थपर्यायाशुद्धद्रव्यगनैगमः ॥ ५९ ॥
सुखजीवभिदोक्तिस्तु सर्वथा मानबाधिता ।
दुर्नीतिरेव बोद्धव्या शुद्धबोधैरसंशयम् ॥ ६० ॥
गोचरीकुरुते शुद्धद्रव्यव्यञ्जनपर्ययौ ।
नैगमोऽन्यो यथासद्चित्सामान्यमिति निर्णयः ॥ ६१ ॥

विद्यते चापरोऽशुद्धद्रव्यव्यञ्जनपर्ययौ ।
अर्थीकरोति यः सोऽत्र नागुणीति निगद्यते ॥ ६२ ॥
भेदाभिसन्धिरत्यन्तं प्रतीतेरपलापकः ।
पूर्ववन्नैगमाभासः प्रत्येतव्यो तयोरपि ॥ ६३ ॥
नवधा नैगमस्यैवं ख्याते पञ्चदशोदिताः ।
नयाः प्रतीतिमारूढाः संग्रहादिनयैः सह ॥६४ ॥
एकत्वेन विशेषाणां ग्रहणं संग्रहो नयः ।
स्वजातेरविरोधेन दृष्टेष्टाभ्यां कथंचन ॥ ६५ ॥
समेकीभावसम्यक्त्वे वर्त्तमानो हि गृह्यते ।
निरुक्त्या लक्षणं तस्य तथा सति विभाव्यते ॥ ६६ ॥
शुद्धद्रव्यमभिप्रेति सन्मात्रं संग्रहः परः ।
स चाशेषविशेषेषु सदौदासीन्यभागिह ॥ ६७ ॥
निराकृतविशेषस्तु सत्त्वाद्वैतपरायणः ।
तदाभासः समाख्यातः सद्भिर्दृष्टेष्टबाधनात् ॥ ६८ ॥
अभिन्नं व्यक्तभेदेभ्यः सर्वथा बहुधानकम् ।
महासामान्यमित्युक्तिः केषांचिद्दुर्नयस्तथा ॥ ६९ ॥
शब्दब्रह्मेति चान्येषां पुरुषाद्वैतमित्यपि ।
संवेदनाद्वयं वेति प्रायशोऽन्यत्र दर्शितम् ॥ ७० ॥
द्रव्यत्वं सकलद्रव्यव्याप्यभिप्रेति चापर ।
पर्यायत्वं च निःशेषपर्यायव्यापि संग्रहः ॥ ७१ ॥
तथैवावान्तरान्भेदान्संगृह्यैकत्वतो बहुः ।
वर्त्ततेऽयं नयः सम्यक् प्रतिपक्षा निराकृतिः॥ ७२ ॥
स्वव्यक्त्यात्मकतैकान्तस्तदाभासोऽप्यनेकधा ।
प्रतीतिबाधितो बोध्यो निःशेषोऽप्यनया दिशा ॥ ७३ ॥
संग्रहेण गृहीतानामर्थानां विधिपूर्वकम् ।
योऽवहारो विभागः स्याद् व्यवहारनयः स नः ॥ ७४ ॥

स चानेकप्रकारः स्यादुत्तरः परसंग्रहात् ।
यत्सत्तद्द्रव्यपर्य्यायाविति प्रागृजुसूत्रत. ॥ ७५ ॥
कल्पनारोपितद्रव्यपर्यायप्रविभागभाक् ।
प्रमाणबाधितोऽन्यस्तु तदाभासोऽवसीयताम् ॥ ७६ ॥
ऋजुसूत्रः क्षणध्वंसि वस्तु सत्सूत्रयेदृजुः ।
प्राधान्येन गुणीभावाद्द्रव्यस्यानर्पणात्सतः ॥ ७७ ॥
निराकरोति यो द्रव्यं व्यवहारश्च सर्वथा ।
तदाभासोऽभिमन्तव्यः प्रतीतेरपलापकः ॥ ७८ ॥
कार्यकारणता नास्ति ग्राह्यग्राहकतापि वा ।
वाच्यवाचकता चेति क्वार्थसाधनदूषणम् ॥ ७९ ॥
लोकसंवृतिसत्य च सत्य च परमार्थता ।
क्वैवं सिद्ध्येद्यदाश्रित्य बौद्धानां धर्मदेशना ॥ ८० ॥
सामानाधिकरण्यं च विशेषणविशेष्यता ।
साध्यसाधनभावो वा क्वाधाराधेयतापि च ॥ ८१ ॥
सयोगो विप्रयोगो वा क्रियाकारकसंस्थितिः ।
सादृश्यं वैसादृश्य वा स्वसन्तानेतरस्थितिः ॥ ८२ ॥
समुदायः क्व प्रेत्यभावादिर्द्रव्यस्य निह्नवे ।
बन्धमोक्षव्यवस्था वा सर्वदेष्टा प्रसिद्धितः ॥ ८३ ॥
कालादिभेदतोऽर्थस्य भेदं य. प्रतिपादयेत् ।
सोऽत्र शब्दनयः शब्दप्रधानत्वादुदाहृत. ॥ ८४ ॥
विश्वदृश्वास्य भविता सूनुरित्येकमार्थता ।
पदार्थे कालभेदेऽपि व्यहारानुरोधत. ॥ ८५ ॥
करोति क्रियते पुष्यस्तारकापोऽम्भ इत्यपि ।
कारकव्यक्तिसंख्याना भेदोऽपि च परे जनाः ॥ ८६ ॥
एहि मन्ये रथेनेत्यादिकसाधनभिद्यपि ।
सतिष्ठेत प्रतिष्ठेतेत्याद्युपग्रहभेदने ॥ ८७ ॥

तत्र श्रेयःपरीक्षायामिति शब्दः प्रकाशयेत् ।
कालादिभेदनेऽप्यर्थाभेदनेऽतिप्रसंगतः ॥ ८८ ॥
तथा कालादिनानात्वकल्पनं निष्प्रयोजनम् ।
सिद्धेः कालादिनैकेन कार्यस्येष्टस्य तत्त्वतः ॥ ८९ ॥
कालाद्यन्यतमस्यैव कल्पनं तैर्विधीयताम् ।
येषां कालादिभेदेऽपि पदार्थैकत्वनिश्चयः ॥ ९० ॥
शब्दः कालादिभिर्भिन्नोऽभिन्नार्थप्रतिपादकः ।
कालादिभिन्नशब्दत्वात्तादृक्सिद्धान्यशब्दवत् ॥ ९१ ॥
पर्यायशब्दभेदेन भिन्नार्थस्याभिरोहणात् ।
नयः समभिरूढः स्यात्पूर्ववच्चास्य निर्णयः ॥ ९२ ॥
इन्द्रः पुरन्दरः शक्र इत्याद्या भिन्नगोचराः ।
शब्दा विभिन्नशब्दत्वाद्वाजिवारणशब्दवत् ॥ ९३ ॥
तत्क्रियापरिणामोऽर्थस्तथैवेति विनिश्चयात् ।
एवंभूतेन नीयेत क्रियान्तरपराङ्मुखः ॥ ९४ ॥
यो यत्क्रियार्थमाचष्टे नासावन्यत्क्रियां ध्वनिः ।
पठतीत्यादिशब्दानां पाठाद्यर्थप्रसंजनम् ॥ ९५ ॥
इत्यन्योऽन्यमपेक्षायां सन्तः शब्दादयो नयाः ।
निरपेक्षाः पुनस्ते स्युस्तदाभासा विरोधतः ॥ ९६ ॥
तत्रर्जुसूत्रपर्यन्ताश्चत्वारोऽर्थनया मताः ।
त्रयः शब्दनयाः शेषाः शब्दवाच्यार्थगोचराः ॥ ९७ ॥
पूर्वः पूर्वनयो भूमविषयः कारणात्मकः ।
परः परः पुनः सूक्ष्मगोचरो हेतुमानिह ॥ ९८ ॥
सन्मात्रविषयत्वेन संग्रहस्य न युज्यते ।
महाविषयता भावा-भावार्थान्नैगमान्नयात् ॥ ९९ ॥
यथाहि सति संकल्पस्तथैवासति विद्यते ।
तत्र प्रवर्त्तमानस्य नैगमस्य महार्थता ॥ १०० ॥

संग्रहाद्व्यवहारोऽपि स्याद्विशेषाववोधकः ।
न भूमविषयोऽशेषसत्समूहोपदर्शिन ॥ १०१ ॥
नर्जुसूत्रः प्रभूतार्थो वर्तमानार्थगोचरः ।
कालत्रितयवृत्त्यर्थगोचराद् व्यवहारतः ॥ १०२ ॥
कालादिभेदतोऽप्यर्थमभिन्नमुपगच्छतः ।
नर्जुसूत्रान्महार्थोऽत्र शब्दस्तद्विपरीतवित् ॥ १०३ ॥
शब्दात्पर्यायभेदेनाभिन्नमर्थमभीच्छतः ।
न स्यात्समभिरूढोऽपि महार्थस्तद्विपर्ययः ॥ १०४ ॥
क्रियाभेदेऽपि चाभिन्नमर्थमभ्युपगच्छतः ।
नैवंभूतः प्रभूतार्थनयः समभिरूढतः ॥ १०५ ॥
नैगमप्रातिकूल्येन सग्रहः सप्रवर्तते ।
ताभ्यां वाचामिहाभीष्टा सप्तभङ्गी विभागतः ॥ १०६ ॥
नैगमव्यवहाराभ्यां विरुद्धाभ्यां तथैव सा ।
स्यान्नैगमर्जुसूत्राभ्या तादृग्भ्यामविगानतः ॥ १०७ ॥
सशब्दान्नैगमादन्यायुक्तात्समभिरूढतः ।
सैवंभूताच्च सा ज्ञेया विधानप्रतिषेधगा ॥ १०८ ॥
सग्रहादेश्च शेषेण प्रतिपक्षेण गम्यताम् ।
तथैव व्यापिनी सप्तभङ्गी नयविदां मता ॥ १०९ ॥
विशेषैरुत्तरैः सर्वैर्नयानामुदितात्मनाम् ।
परस्परविरुद्धार्थैर्द्वन्द्ववृत्तिर्यथायथम् ॥ ११० ॥
प्रत्येया प्रतिपर्यायमविरुद्धा तथैव सा ।
प्रमाणसप्तभङ्गीच ता विना नाभिवागतिः ॥ १११ ॥
सर्वे शब्दनयास्तेन परार्थप्रतिपादने ।
स्वार्थप्रकाशने मातुरिमे ज्ञाननयाः स्थिताः ॥ ११२ ॥
तैर्नीयमानवस्त्वंशाः कथ्यन्तेऽर्थनयाश्च ते ।
त्रिधैव व्यवतिष्ठन्ते प्रधानगुणभावतः ॥ ११३ ॥

यत्र प्रवर्त्ततेऽर्थांशे नियमादुत्तरो नयः ।
पूर्वः पूर्वो नयस्तत्र वर्त्तमानो न वार्यते ॥ ११४ ॥
सहस्रेऽष्टशती यद्वत्तस्यां पञ्चशती मता ।
पूर्वसंख्योत्तरत्र स्यात्संख्यायामविरोधतः ॥ ११५ ॥
पूर्वत्र नोत्तरा संख्या यथा जातु प्रवर्त्तते ।
तथोत्तरनयः पूर्वनयार्थे सकले सदा ॥ ११६ ॥
नयार्थेषु प्रमाणस्य वृत्तिः सकलदेशिन ।
भवेन्न तु प्रमाणार्थे नयानामखिलेऽञ्जसा ॥ ११७ ॥
संक्षेपेण नयास्तावद्व्याख्याताः सूत्रसूचिताः ।
तद्विशेषाः प्रपञ्चेन संचिन्त्या नयचक्रतः ॥ ११८ ॥

शार्दूलविक्रीडितम् ।

बालानां हितकामिनामतिमहापापैः पुरोपार्जितै-
र्माहात्म्यात्तमसः स्वयं कलिबलात्प्रायो गुणद्वेषिभिः ।
न्यायोऽयं मलिनीकृतः कथमपि प्रक्षाल्यते नीयते
सम्यग्ज्ञानजलैर्वचोभिरमलं तत्रानुकम्पापरैः ॥ ११९ ॥

इति नयविवरणं समाप्तम् ।

ॐ

# श्रीमत्पूज्यपादस्वामिविरचितं

# समाधिशतकम् ।

## सटिप्पणीकम् ।

## ( १४ )

सिद्ध[1] जिनेन्द्रमलमप्रतिमप्रबोध
निर्वाणमार्गममल विबुधेन्द्रवन्द्यम् ।
ससारसागरसमुत्तरणप्रपोत
वक्ष्ये समाधिशतक प्रणिपत्य वीरम् ॥ १ ॥

श्रीपूज्यपादस्वामी मुमूक्षूणां मोक्षोपाय मोक्षस्वरूपं चोपदर्शयितु-कामो निर्विघ्नत. शास्त्रपरिसमाप्त्यादिक फलमभिलषन्निष्टदेवताविशेषं नमस्कुर्वन्नाह—

येनात्माऽबुध्यतात्मैव परत्वेनैव चापरम् ।
अक्षयानन्तबोधाय तस्मै सिद्धात्मने नमः[2]॥ १ ॥

---

१ उत्थानिकाकारस्येद मङ्गलाचरणम्. २ अत्र च पूर्वार्द्धेन मोक्षोपाय उत्तरार्धेन च मोक्षस्वरूपमुपदर्शितम् । सिद्धात्मने सिद्धपरमेष्ठिने सिद्धः सकलकर्मविप्रमुक्तः सचासावात्मा च तस्मै नमः । येन किं कृत अबुध्यत ज्ञात कोऽसौ आत्मा कथ आत्मैव । अयमर्थ —येन सिद्धात्मनात्मैवात्मत्वे-नैवाबुध्यत न शरीरादिक कर्मोपार्जितसुरनरनारकतिर्यगादिजीवपर्याया-दिकश्च । तथा "परत्वेनैव चापर" अपरश्च शरीरादिक कर्मजनितमनुष्यादि-जीवपर्यायादिकश्च परत्वेनैवात्मनो भेदेनाबुध्यत तस्मै । कथभूताय " अक्ष-यानन्तबोधाय" अक्षयोऽविनश्वरोऽनन्तो देशकालापरिच्छिन्नसमस्तार्थपरि-च्छेदको वा बोधो यस्य तस्मै । एवविधबोधस्य चानन्तदर्शनसुखवीर्यैरवि-

अथोक्तप्रकारसिद्धस्वरूपस्य तत्प्राप्त्युपायस्य चोपदेष्टारं सकलात्मानमिष्टदेवताविशेषं स्तोतुमाह—

जयन्ति यस्यावदतोऽपि भारती—
विभूतयस्तीर्थकृतोऽप्यनीहितुः।
शिवाय धात्रे सुगताय विष्णवे
जिनाय तस्मै सकलात्मने नमः ॥ २ ॥

ननु विकल्पेतररूपमात्मान नत्वा भवान् किं करिष्यतीत्याह—

श्रुतेन लिङ्गेन यथात्मशक्ति
समाहितान्तःकरणेन सम्यक्।
समीक्ष्य कैवल्यसुखस्पृहाणां
विविक्तमात्मानमथाभिधास्ये ॥ ३ ॥

येन विविक्तमात्मानमिति विशेष्योच्यत इत्याशङ्क्याह—

बहिरन्तः परश्चेति त्रिधात्मा सर्वदेहिषु।
उपेयात्तत्र परमं मध्योपायाद्बहिस्त्यजेत् ॥ ४ ॥

तत्र कुत. कस्योपादान कस्य वा त्यागः कर्तव्य इत्यत आह। तत्र बहिरन्त. परमात्मानं प्रत्येक लक्षणमाह—

---

नाभावित्वसामर्थ्यादनन्तचतुष्टयरूपायेति गम्यते। ननु चेष्टदेवताविशेषस्य पञ्चपरमेष्ठिरूपत्वादत्र सिद्धात्मन एव कस्माद् ग्रन्थकृता नमस्कारः कृत इति चेत् ग्रन्थस्य कर्तुर्व्याख्यातु. श्रोतुस्तदर्थानुष्ठातुश्च सिद्धस्वरूपप्राप्त्यर्थित्वात्। यो हि यत्स्वरूपप्राप्त्यर्थी स तद्गुणसम्पन्न पुरुषविशेष नमस्कुर्वाणो दृष्टो यथा कश्चिद्धनुर्वेदपरिज्ञानार्थी धनुर्वेदविदः सिद्धस्वरूपप्राप्त्यर्थी च समाधिशतकशास्त्रस्य कर्ता व्याख्याता श्रोता तदर्थानुष्ठाता चात्मविशेषस्तस्मात्सिद्धात्मान नमस्करोतीति सिद्धशब्देनैव चार्हदादीनामपि ग्रहणम्। तेषामपि देशत. सिद्धस्वरूपोपेतत्वात्।

१ 'निष्कलेतर—' इति पाठान्तरम्।

वहिरात्मा शरीरादौ[1] जातात्मभ्रान्तिरान्तरः ।
चित्तदोषात्मविभ्रान्तिः[2] परमात्मातिनिर्मलः[3] ॥ ५ ॥

तद्वाचिका नाममालां दर्शयन्नाह,—

निर्मलः केवलः[4] सिद्धो[5] विविक्तः[6] प्रभुरक्षयः[7][8] ।
परमेष्ठी[9] परात्मेति[10] परमात्मेश्वरो[11] जिनः ॥ ६ ॥

इदानीं वहिरात्मनो देहस्यात्मत्वेनाध्यवमाये कारणमुपदर्शयन्नाह,—

वहिरात्मेन्द्रियद्वारैरात्मज्ञानपराङ्मुखः ।
स्फुरितश्चात्मनो देहमात्मत्वेनाध्यवस्यति ॥ ७ ॥
नरदेहस्थमात्मानमविद्वान्मन्यते नरम् ।
तिर्यञ्च तिर्यगङ्गस्थं सुराङ्गस्थं सुरं तथा ॥ ८ ॥
नारकं नारकाङ्गस्थ न स्वयं तत्त्वतस्तथा[12] ।
अनन्तानन्तधीशक्तिः स्वसंवेद्योऽचलस्थितिः ॥ ९ ॥

स्वदेह एवमध्यवसाय कुर्वाणो वहिरात्मा परदेहे कथभूत करोतीत्याह,—

स्वदेहसदृश दृष्ट्वा परदेहमचेतनम् ।
परात्माधिष्ठितं[13] मूढः परत्वेनाध्यवस्यति[14] ॥ १० ॥

एवंविधाध्यवसायात्किं भवतीत्याह,—

स्वपराध्यवसायेन देहेष्वविदितात्मनाम् ।
वर्त्तते विभ्रमः[15] पुंसां पुत्रभार्यादिगोचरः ॥ ११ ॥

एवंविधविभ्रमाच्च किं भवतीत्याह—

अविद्यासंज्ञितस्[16]तस्मात्संस्कारो जायते दृढः ।
येन लोकोऽङ्गमेव स्वं पुनरप्यभिमन्यते ॥ १२ ॥

---

१ आदिशब्दाद्वाङ्मनसोर्ग्रहण २ विगता भ्रान्ति ३ कर्ममलरहित ४ प्रक्षीणाशेपकर्ममल ५ परमविशुद्धिसमन्वित ६ प्रक्षीणाशेपकर्ममल ७ स्वामी ८ अव्यय. ९ इन्द्रादिपदे तिष्ठतीति १० ससारिजीवेभ्य उत्कृष्टात्मा ११ इन्द्राद्यसभाविनान्तरङ्गवहिरङ्गेण परमैश्वर्येण सम्पन्न १२ तत्त्वतो निश्चयेन स्वयमात्मा चतुर्गतिमयो न भवति. १३ देह. १४ अन्यत्वेन. १५ विपरीतत्वम् १६ प्रतिभासित ।

एवं मन्यमानश्चासौ किं करोतीत्याह—

देहे स्वबुद्धिरात्मानं युनक्त्येतेन निश्चयात् ।
स्वात्मन्येवात्मधीस्तस्माद्वियोजयति देहिनम् ॥ १३ ॥

देहेष्वात्मानं योजयतश्च वहिरात्मनो दुर्विलसितोपदर्शनपूर्वकमाचार्योऽनुशय कुर्वन्नाह—

देहेष्वात्मधिया जाताः पुत्रभार्यादिकल्पनाः ।
सम्पत्तिमात्मनस्ताभिर्मन्यते हा हतं जगत् ॥ १४ ॥

इदानीमुक्तमर्थमुपसंहृत्यात्मन्यन्तरात्मनोऽनुप्रवेश दर्शयन्नाह—

मूलं संसारदुःखस्य देह एवात्मधीस्ततः ।
त्यक्त्वैनां प्रविशेदन्तर्वहिरव्यावृतेन्द्रियः ॥ १५ ॥

आत्मीयां वहिरात्मावस्थामनुस्मृत्य विषादं कुर्वन्नाह—

मत्तश्च्युत्वेन्द्रियद्वारैः पतितो विषयेष्वहम् ।
तान्प्रपद्याहमिति मां पुरावेद न तत्त्वतः ॥ १६ ॥

अथात्मनो ज्ञप्तौ उपायमुपदर्शयन्नाह—

एवं त्यक्त्वा बहिर्वाचं त्यजेदन्तरशेषतः ।
एष योगः समासेन प्रदीपः परमात्मनः ॥ १७ ॥

कुतः पुनर्वहिरन्तर्वाचस्त्यागः कर्त्तव्य इत्याह—

यन्मया दृश्यते रूपं तन्न जानाति सर्वथा ।
जानन्न दृश्यते रूपं ततः केन ब्रवीम्यहम् ॥ १८ ॥

एवं वहिर्विकल्प परित्यज्यान्तर्विकल्पं परित्याजयन्नाह—

यत्परैः प्रतिपाद्योऽहं यत्परान्प्रतिपादये ।
उन्मत्तचेष्टितं तन्मे यदहं निर्विकल्पकः ॥ १९ ॥

तदेव विकल्पातीते स्वरूपं निरूपयन्नाह—

यदग्राह्यं न गृह्णाति गृहीतं नापि मुञ्चति ।
जानाति सर्वथा सर्वं तत्स्वसंवेद्यमस्म्यहम् ॥ २० ॥

पूर्वं कीदृश मम चेष्टितमित्याह—

उत्पन्नपुरुषभ्रान्तेः स्थाणौ यद्वद्विचेष्टितम् ।
तद्वन्मे चेष्टितं पूर्वं देहादिष्वात्मविभ्रमात् ॥ २१ ॥

साम्प्रत तत्परिज्ञाने सति कीदृश मे चेष्टितमित्याह—

यथासौ चेष्टते स्थाणौ निवृत्ते पुरुषाग्रहे ।
तथाचेष्टोऽस्मि देहादौ विनिवृत्तात्मविभ्रमः ॥ २२ ॥

अथेदानीमात्मनि स्त्र्यादिना लिङ्गैकादिसङ्ख्याविभ्रमनिवृत्त्यर्थं तद्विविक्तासाधारणस्वरूपदर्शनार्थं चाह—

येनात्मनानुभूयेऽहमात्मनैवात्मनात्मनि ।
सोऽहं न तन्न सा नासौ नैको न द्वौ न वा बहुः ॥ २३ ॥

येनात्मना त्वमनुभूयसे स कीदृश इत्याह—

यदभावे सुषुप्तोऽहं यद्भावे व्युत्थितः पुनः ।
अतीन्द्रियमनिर्देश्यं तत्स्वसंवेद्यमस्म्यहम् ॥ २४ ॥

तत्स्वरूप स्वसवेदयतो रागादिप्रक्षयान्न क्वचिच्छत्रुमित्रव्यवस्था भवतीति दर्शयन्नाह—

क्षीयन्तेऽत्रैव रागाद्यास्तत्त्वतो मां प्रपश्यतः ।
बोधात्मानं ततः कश्चिन्न मे शत्रुर्न च प्रियः ॥ २५ ॥

यदि त्वमन्यस्य कस्यचिन्न शत्रुर्मित्र वा तथापि तवान्य. कश्चिद्भविष्यतीत्याशङ्क्याह—

मामपश्यन्नयं लोको न मे शत्रुर्न च प्रियः ।
मां प्रपश्यन्नयं लोको न मे शत्रुर्न च प्रियः ॥ २६ ॥

बहिरात्मत्यागे परमात्मप्राप्तौ चोपायत्व दर्शयन्नाह—

त्यक्त्वैव बहिरात्मानमन्तरात्मव्यवस्थितः ।
भावयेत्परमात्मानं सर्वसङ्कल्पवर्जितम् ॥ २७ ॥

तद्भावनाया फल दर्शयन्नाह—

सोऽहमित्यात्तसंस्कारस्तस्मिन् भावनया पुनः ।
तत्रैव दृढसस्काराल्लभते ह्यात्मनि स्थितिम् ॥ २८ ॥

कथं कस्यचित्तत्र प्रवृत्तिरित्याशङ्कां निराकुर्वन्नाह—

मूढात्मा यत्र विश्वस्तस्ततो नान्यद्भयास्पदम् ।
यतो भीतस्ततो नान्यदभयस्थानमात्मनः ॥ २९ ॥

कस्यात्मनः कीदृशस्तत्प्रतिपत्त्युपाय इत्याह—

सर्वेन्द्रियाणि संयम्य स्तिमितेनान्तरात्मना ।
यत्क्षणं पश्यतो भाति तत्तत्त्वं परमात्मना ॥ ३० ॥

कस्मिन्नाराधिते तत्स्वरूपप्राप्तिर्भविष्यतीत्याशङ्कयाह—

यः परात्मा स एवाहं योऽहं स परमस्ततः ।
अहमेव मयोपास्यो नान्यः कश्चिदिति स्थितिः ॥ ३१ ॥

एवं स्वरूप एवाराध्याराधकभावव्यवस्था । एतदेव दर्शयन्नाह,—

प्रच्याव्य विषयेभ्योऽहं मां मयैव मयि स्थितम् ।
बोधात्मानं प्रपन्नोऽस्मि परमानन्दनिर्वृतिम् ॥ ३२ ॥

एवमात्मानं शरीराद्भिन्नं यो न जानाति त प्रत्याह—

यो न वेत्ति परं देहादेवमात्मानमव्ययम् ।
लभते न स निर्वाणं तप्त्वापि परमं तपः ॥ ३३ ॥

ननु परमतपोऽनुष्ठायिनां महद्दुःखोत्पत्तितो मन.खेदसद्भावात्कथं निर्वाणप्राप्तिरिति वदन्त प्रत्याह—

आत्मदेहान्तरज्ञानजनिताह्लादनिर्वृतः ।
तपसा दुष्कृतं घोरं भुञ्जानोऽपि न खिद्यते ॥ ३४ ॥

खेद गच्छतामात्मस्वरूपोपलम्भाभाव दर्शयन्नाह—

रागद्वेषादिकल्लोलैरलोलं यन्मनोजलम् ।
स पश्यत्यात्मनस्तत्त्वं तत्तत्त्वं नेतरो जनः॥ ३५ ॥

किं पुनस्तत्त्वशब्देनोच्यते इत्याह—

अविक्षिप्तं मनस्तत्त्व विक्षिप्तं भ्रान्तिरात्मनः ।
धारयेत्तदविक्षिप्तं विक्षिप्तं नाश्रयेत्ततः ॥ ३६ ॥

कुत. पुनर्मनसो विक्षेपो भवति, कुतश्चाविक्षेप इत्याह—

अविद्याभ्याससंस्कारैरवश क्षिप्यते मनः।
तदेव ज्ञानसंस्कारैः स्वतस्तत्त्वेऽवतिष्ठते॥ ३७॥

चित्तस्य विक्षेपेऽविक्षेपे च फल दर्शयन्नाह—

अपमानादयस्तस्य विक्षेपो यस्य चेतसः।
नापमानादयस्तस्य न क्षेपो यस्य चेतसः॥ ३८॥

अपमानादीना चापगमे उपायमाह—

यदा मोहात्प्रजायेते रागद्वेषौ तपस्विनः।
तदैव भावयेत्स्वस्थमात्मानं शाम्यतः क्षणात्॥ ३९॥

तत्र रागद्वेषयोर्विषय विपक्ष च प्रदर्शयन्नाह—

यत्र काये मुने. प्रेम ततः प्रच्याव्य देहिनम्।
बुध्या तदुत्तमे काये योजयेत्प्रेम नश्यति॥ ४०॥

तस्मिन्नष्टे किं भवतीत्याह—

आत्मविभ्रमजं दुःखमात्मज्ञानात्प्रशाम्यति।
नायतास्तत्र निर्वान्ति कृत्वापि परमं तपः॥ ४१॥

अन्तरात्मा च कि करोतीत्याह—

शुभं शरीर दिव्यांश्च विषयानभिवाञ्छति।
उत्पन्नात्ममतिर्देहे तत्त्वज्ञानी ततश्च्युतिम्॥ ४२॥

तत्त्वज्ञानीतरयोरबन्धकत्वबन्धकत्वे दर्शयन्नाह—

परत्राहंमति. स्वस्माच्च्युतो बध्नात्यसंशयम्।
स्वस्मिन्नहमतिश्च्युत्वा परस्मान्मुच्यते बुधः॥ ४३॥

यत्राहमतिर्बहिरात्मनो जाता तत्तेनकथमध्यवसीयते चान्तरात्मनस्तत्तेन कथमित्याशङ्क्याह—

दृश्यमानमिदं मूढस्त्रिलिङ्गमवबुध्यते।
इदमित्यवबुद्धस्तु निष्पन्न शब्दवर्जितम्॥ ४४॥

ननु अन्तरात्मैवमात्मान प्रतिपद्यते तदा कथ पुमान् गौरोऽहमित्यादिरूप तस्य कदाचिदभेदभ्रान्ति· स्यादिति वदन्त प्रत्याह—

---

१ मनएव  २ अयत्नपराः.

जानन्नप्यात्मनस्तत्त्वं विविक्तं भावयन्नपि ।
पूर्वविभ्रमसंस्काराद्भ्रान्तिं भूयोऽपि गच्छति ॥ ४५ ॥

भूयो भ्रान्तिं गतोऽसौ कथं तां त्यजेदित्याह—

अचेतनमिदं दृश्यमदृश्यं चेतनं ततः ।
क्व रुष्यामि क्व तुष्यामि मध्यस्थोऽहं भवाम्यतः ॥ ४६ ॥

इदानीं मूढात्मनोऽन्तरात्मनश्च त्यागोपादानविषयं दर्शयन्नाह—

त्यागादाने बहिर्मूढः करोत्यध्यात्ममात्मवित् ।
नान्तर्बहिरुपादानं न त्यागो निष्ठितात्मनः ॥ ४७ ॥

अन्तस्त्यागोपादाने कुर्वाणोऽन्तरात्मा कथं कुर्यादित्याह—

युञ्जीत मनसात्मानं वाक्कायाभ्यां वियोजयेत् ।
मनसा व्यवहारं तु त्यजेद्वाक्काययोजितम् ॥ ४८ ॥

ननु पुत्रकलत्रादिना सह वाक्कायव्यवहारे सुखोत्पत्तिः प्रतीयते कथं तत्त्यागो युक्त इत्याह—

जगद्देहात्मदृष्टीनां विश्वासो रम्यमेव वा ।
आत्मन्येवात्मदृष्टीनां क्व विश्वासः क्व वा रतिः ॥ ४९ ॥

नन्वेवमाहारादावप्यन्तरात्मनः कथं प्रवृत्तिः स्यादित्याह—

आत्मज्ञानात्परं कार्यं न बुद्धौ धारयेच्चिरम् ।
कुर्यादर्थवशात्किञ्चिद्वाक्कायाभ्यामतत्परः ॥ ५० ॥

तदनासक्तः कुतः पुनरात्मज्ञानमेव बुद्धौ धारयेन्न शरीरादिकमित्याह—

यत्पश्यामीन्द्रियैस्तन्मे नास्ति यन्नियतेन्द्रियः ।
अन्तः पश्यामि सानन्दं तदस्तु ज्योतिरुत्तमम् ॥ ५१ ॥

ननु सानन्दं ज्योतिर्यद्यात्मनो रूपं स्यात्तदेन्द्रियनिरोधं कृत्वा तदनुभवतः कथं दुःखं स्यादित्याह—

सुखमारब्धयोगस्य बहिर्दुःखमथात्मनि ।
बहिरेवासुखं सौख्यमध्यात्मं भावितात्मनः ॥ ५२ ॥

तद्भावना चेत्थं कुर्यादित्याह—

तद्ब्रूयात्तत्परान्पृच्छेत्तदिच्छेत्तत्परो भवेत् ।
येनाविद्यामयं रूपं त्यक्त्वा विद्यामयं व्रजेत् ॥ ५३ ॥

ननु वाक्कायव्यतिरिक्तस्यात्मनोऽसम्भवात्तद्ब्रूयादित्याद्ययुक्तमिति वदन्त प्रत्याह—

शरीरे वाचि चात्मान सधत्ते वाक्शरीरयो ।
भ्रान्तोऽभ्रान्तः पुनस्तत्त्व पृथगेषां विबुध्यते ॥ ५४ ॥

एवमबुध्यमानो मूढात्मा येषु विषयेष्वासक्तचित्तो न तेषु मध्ये किंचित्तस्योपकारकमस्तीत्याह—

न तदस्तीन्द्रियार्थेषु यत् क्षेमङ्करमात्मन ।
तथापि रमते बालस्तत्रैवाज्ञानभावनात् ॥ ५५ ॥

तथानादिमिथ्यासस्कारे सत्येवभूता बहिरात्मानो भवन्तीत्याह—

चिरं सुषुप्तास्तमसि मूढात्मान कुयोनिषु ।
अनात्मीयात्मभूतेषु ममाहमिति जाग्रति ॥ ५६ ॥

ततोऽबहिरात्मस्वरूप परित्यज्य स्वशरीरमित्थ पश्येदित्याह—

पश्येन्निरन्तर देहमात्मनो नात्मचेतसा ।
अपरात्मधियान्येषामात्मतत्त्वे व्यवस्थित ॥ ५७ ॥

नन्वेवमात्मतत्त्व स्वयमनुभूय मूढात्मना किमिति न प्रतिपाद्यते येन तेऽपि तज्जानन्तीति वदन्त प्रत्याह—

अज्ञापित न जानन्ति यथा मां ज्ञापित तथा ।
मूढात्मानस्ततस्तेषां वृथा मे ज्ञापनश्रम ॥ ५८ ॥

किञ्च—

यद्बोधयितुमिच्छामि तन्नाह यदहं पुन ।
ग्राह्य तदपि नान्यस्य तत्किमन्यस्य बोधये ॥ ५९ ॥

बोधितोऽपि भ्रान्तस्तत्त्वे बहिरात्मनो तत्रानुराग सभवति मोहोदयात्तस्य बहिरर्थ एवानुरागादिति दर्शयन्नाह—

बहिस्तुष्यति मूढात्मा पिहितज्योतिरन्तरे ।
तुष्यत्यन्त. प्रबुद्धात्मा बहिर्व्यावृत्तकौतुक. ॥ ६० ॥

कुतोऽसौ शरीरादिविषये निवृत्तभूषणमण्डनादिकौतुक इत्याह—

न जानन्ति शरीराणि सुखदुःखान्यबुद्धयः ॥
निग्रहानुग्रहधियं तथाप्यत्रैव कुर्वते ॥ ६१ ॥

यावच्च शरीरादावात्मबुद्ध्या प्रवृत्तिस्तावत्संसारस्तदभावान्मुक्तिरिति दर्शयन्नाह—

स्वबुद्ध्या यावद्गृह्णीयात् कायवाक्चेतसां त्रयम् ।
संसारस्तावदेतेषां भेदाभ्यासे तु निर्वृतिः ॥ ६२ ॥

शरीरादावात्मनो भेदाभ्यासे च शरीरदृढतादौ नात्मनो दृढतादिक मन्यत इति दर्शयन् 'घने' इत्यादि श्लोकचतुष्टयमाह—

घने वस्त्रे यथात्मानं न घनं मन्यते तथा ।
घने स्वदेहेऽप्यात्मानं न घनं मन्यते बुधः ॥ ६३ ॥
जीर्णे वस्त्रे यथात्मानं न जीर्णं मन्यते तथा ।
जीर्णे स्वदेहेऽप्यात्मानं न जीर्णं मन्यते बुधः ॥ ६४ ॥
नष्टे वस्त्रे यथात्मानं न नष्टं मन्यते तथा ।
नष्टे स्वदेहेऽप्यात्मानं न नष्टं मन्यते बुधः ॥ ६५ ॥
रक्ते वस्त्रे यथात्मानं न रक्तं मन्यते तथा ।
रक्ते स्वदेहेऽप्यात्मानं न रक्तं मन्यते बुधः ॥ ६६ ॥

एव शरीरादिभिन्नमात्मानं भावयतोऽन्तरात्मनः शरीरादे काष्ठादितुल्यताप्रतिभासे मुक्तियोग्यता भवतीति दर्शयन्नाह—

यस्य सस्पन्दमाभाति निष्पन्देन समं जगत् ।
अप्रज्ञमक्रियाभोगं स समं याति नेतरः ॥ ६७ ॥

तद्विलक्षणो बहिरात्मा सोऽप्येव शरीरादिभ्यो भिन्नमात्मान किमिति न प्रतिपद्यत इत्याह—

शरीरकञ्चुकेनात्मा संवृतो ज्ञानविग्रहः ।
नात्मानं बुध्यते तस्माद् भ्रमत्यतिचिरं भवे ॥ ६८ ॥

यथात्मस्वरूपमात्मतत्त्वेन बहिरात्मानो न बुध्यन्ते तदा किमात्मत्वेन ते बुध्यन्ते इत्याह—

प्रविशद्गलतां व्यूहे देहेऽणूनां समाकृतौ।
स्थितिभ्रान्त्या प्रपद्यन्ते तमात्मानमबुद्धयः ॥ ६९ ॥

ततो यथावदात्मस्वरूपप्रतिपत्तिमिच्छन्नात्मान देहाद्भिन्न भावयेदित्याह—

गौर. स्थूल कृशो वाहमित्यङ्गेनाविशेषयन् ।
आत्मानं धारयेन्नित्यं केवलं ज्ञप्तिविग्रहम् ॥ ७० ॥

यस्त्वेवविधमात्मानमेकाग्रमनसा भावयेत्तस्यैव मुक्तिर्नान्यस्येत्याह—

मुक्तिरेकान्तिकी तस्य चित्ते यस्याचला धृति. ।
तस्य नैकान्तिकी मुक्तिर्यस्य नास्त्यचला धृति· ॥ ७१ ॥

लोकससर्गं परित्यज्यात्मन स्वरूपस्य स्वसंवेदनानुभवे सति स्यान्नान्यथेति दर्शयन्नाह—

जनेभ्यो वाक् ततः स्पन्दो मनसश्चित्तविभ्रमा· ।
भवन्ति तस्मात्संसर्गं जनैर्योगी ततस्त्यजेत् ॥ ७२ ॥

यत एव ततस्तस्माद्योगी त्यजेत् क संसर्गं सम्बन्ध कै सह जनै· । तर्हि तै ससर्गं परित्यज्याटव्यां निवास कर्त्तव्य इत्याशङ्कां निराकुर्वन्नाह—

ग्रामोऽरण्यमिति द्वेधा निवासोऽनात्मदर्शिनाम् ।
दृष्टात्मना निवासस्तु विविक्तात्मैव निश्चल. ॥ ७३ ॥

अनात्मदर्शिनो दृष्टात्मनश्च फल दर्शयन्नाह—

देहान्तरगतेर्बीजं देहेऽस्मिन्नात्मभावना ।
बीजं विदेहनिष्पत्तेरात्मन्येवात्मभावना ॥ ७४ ॥

तर्हि मुक्तिप्राप्तेर्हेतु कश्चिद्गुरुर्भविष्यतीति वदन्त प्रत्याह—

नयत्यात्मानमात्मैव जन्म निर्वाणमेव वा ।
गुरुरात्मात्मनस्तस्मान्नान्योऽस्ति परमार्थत. ॥ ७५ ॥

नान्यो गुरुरस्ति परमार्थतो व्यवहारेषु तु यदि भवति तदा भवतु।
देहे स्वबुद्धिर्मरणोपनिपाते किं करोतीत्याह—

दृढात्मबुद्धिर्देहादावुत्पश्यन्नाशमात्मनः।
मित्रादिभिर्वियोगं च बिभेति मरणाद्भृशम् ॥ ७६ ॥

यस्तु स्वात्मन्येवात्मबुद्धिः स मरणोपनिपाते किं करोतीत्याह—

आत्मन्येवात्मधीरन्यां शरीरगतिमात्मनः।
मन्यते निर्भयं त्यक्त्वा वस्त्रं वस्त्रान्तरग्रहम् ॥ ७७ ॥

एव च स एव बुध्यते यो व्यवहारे अनादरपरो यस्तु तत्रादरपरः स न बुध्यते इत्याह—

व्यवहारे सुषुप्तो यः स जागर्त्यात्मगोचरे।
जागर्ति व्यवहारेऽस्मिन् सुषुप्तश्चात्मगोचरे ॥ ७८ ॥

यश्चात्मगोचरे जागर्ति स मुक्तिं प्राप्नोतीत्याह—

आत्मानमन्तरे दृष्ट्वा दृष्ट्वा देहादिकं बहिः।
तयोरन्तरविज्ञानादभ्यासादच्युतो भवेत् ॥ ७९ ॥

प्रारब्धयोगावस्थाया निष्पन्नयोगावस्थाया च कीदृशं जगत्प्रतिभासत इत्याह—

पूर्वं दृष्टात्मतत्त्वस्य विभात्युन्मत्तवज्जगत्।
स्वभ्यस्तात्मधियः पश्चात्काष्ठपाषाणरूपवत् ॥ ८० ॥

ननु स्वभ्यस्तात्मधिय इति व्यर्थं शरीराद्भेदेनात्मनस्तत्स्वरूपविद्भ्यः श्रुण्वतस्वयं चान्येषां तत्स्वरूपप्रतिपादनान्मुक्तिर्भविष्यतीत्याशङ्क्याह—

शृण्वन्नप्यन्यतः कामं वदन्नपि कलेवरात्।
नात्मानं भावयेद्भिन्नं यावत्तावन्न मोक्षभाक् ॥ ८१ ॥

मोक्षभाजनं तावन्न भवेदात्मा। तद्भावनायां च प्रवृत्तोऽसौ किं करोतीत्याह—

तथैव भावयेद्देहाद्व्यावृत्त्यात्मानमात्मनि।
यथा न पुनरात्मानं देहे स्वप्नेऽपि योजयेत् ॥ ८२ ॥

यथा च परमौदासीन्यावस्थाया स्वपरविकल्पस्त्याज्यस्तथा व्रतविकल्पोऽपि । यतः—

अपुण्यमव्रतै. पुण्य व्रतैर्मोक्षस्तयोर्व्यय ।
अव्रतानीव मोक्षार्थी व्रतान्यपि ततस्त्यजेत् ॥ ८३ ॥

कथ तानि त्यजेदिति तेपा त्यागक्रम दर्शयन्नाह—

अव्रतानि परित्यज्य व्रतेपु परिनिष्ठित. ।
त्यजेत्तान्यपि संप्राप्य परम पदमात्मन. ॥ ८४ ॥

कुतोऽव्रतव्रतविकल्पपरित्यागे परमपदप्राप्तिरित्याह—

यदन्तर्जल्पसंपृक्तमुत्प्रेक्षाजालमात्मन. ।
मूलं दु.खस्य तन्नाशे शिष्टमिष्ट परं पदम् ॥ ८५ ॥

तस्य चोत्प्रेक्षाजालस्य नाश कुर्वाणोऽनेन क्रमेण कुर्यादित्याह—

अव्रती व्रतमादाय व्रती ज्ञानपरायण ।
परात्मज्ञानसम्पन्न स्वयमेव परो भवेत् ॥ ८६ ॥

यथा च व्रतविकल्पो मुक्तेर्हेतुर्न भवति तथा लिङ्गविकल्पोऽपीत्याह—

लिङ्ग देहाश्रित दृष्ट देह एवात्मनो भव ।
न मुच्यन्ते भवात्तस्मादेते लिङ्गकृताग्रहा. ॥ ८७ ॥

येऽपि वर्णाना ब्राह्मणो गुरुरत एव परमपदयोग्य इति वदन्ति तेऽपि न मुक्तियोग्या इत्याह—

जातिर्देहाश्रिता दृष्टा देह एवात्मनो भवः ।
न मुच्यन्ते भवात्तस्मादेते जातिकृताग्रहा. ॥ ८८ ॥

जातिर्ब्राह्मणादिर्देहाश्रितेत्यादि सुगम । तर्हि ब्राह्मणादिजातिविशिष्टो निर्वाणादिदीक्षया दीक्षितो मुक्तिं प्राप्नोतीति वदन्त प्रत्याह—

जातिलिङ्गविकल्पेन येपा च समयाग्रह. ।
तेऽपि न प्राप्नुवन्त्येव परमं पदमात्मन ॥ ८९ ॥

तत्पदप्राप्त्यर्थं जातिविशिष्टे शरीरे निर्ममत्वसिद्ध्यर्थं भोगेभ्यो व्यावृत्त्यापि पुनर्मोहवशात् शरीर एवानुबन्ध कुर्वन्तीत्याह—

यस्यागाय निवर्त्तन्ते भोगेभ्यो यदवाप्तये ।
प्रीतिं तत्रैव कुर्वन्ति द्वेषमन्यत्र मोहिनः ॥ ९० ॥

तेषां देहे दर्शनव्यापारविपर्यासं दर्शयन्नाह—

अनन्तरज्ञः संधत्ते दृष्टिं पङ्गुर्यथान्धके ।
संयोगाद्दृष्टिमङ्गोऽपि सधत्ते तद्वदात्मनः ॥ ९१ ॥

अन्तरात्मा किं करोतीत्याह—

दृष्टिभेदो यथा दृष्टिं पङ्गुरन्धेन योजयेत् ।
तथा न योजयेद्देहे दृष्टात्मा दृष्टिमात्मनः ॥ ९२ ॥

वहिरन्तरात्मनोः काऽवस्था का भ्रान्तिः का वाऽभ्रान्तिरित्याह—

सुप्तोन्मत्ताद्यवस्थैव विभ्रमो नात्मदर्शिनाम् ।
विभ्रमः क्षीणदोषस्य सर्वावस्थात्मदर्शिनः ॥ ९३ ॥

ननु सर्वावस्थात्मदर्शिनोऽप्यशेषशास्त्रपरिज्ञानान्निद्रारहितस्य मुक्तिर्भविष्यतीति वदन्तं प्रत्याह—

विदिताशेषशास्त्रोऽपि न जाग्रदपि मुच्यते ।
देहात्मदृष्टिर्ज्ञातात्मा सुप्तोन्मत्तोऽपि मुच्यते ॥ ९४ ॥

सुप्ताद्यवस्थायामप्यात्मस्वरूपसंवित्त्यवैकल्यात् कुतस्तदा तदवैकल्यमित्याह—

यत्रैवाहितधीः पुंसः श्रद्धा तत्रैव जायते ।
यत्रैव जायते श्रद्धा चित्तं तत्रैव लीयते ॥ ९५ ॥

आसक्तं भवति क्व पुनरनासक्तं चित्तं भवतीत्याह—

यत्रैवाहितधीः पुंसः श्रद्धा तस्मान्निवर्त्तते ।
यस्मान्निवर्त्तते श्रद्धा कुतश्चित्तस्य तल्लयः ॥ ९६ ॥

यत्र च चित्तं विलीयते तद्ध्येयं भिन्नमभिन्नं च भवति । तत्र भिन्नात्मनि ध्येये फलमुपदर्शयन्नाह—

भिन्नात्मानमुपास्यात्मा परो भवति तादृशः ।
वर्त्तिर्दीपं यथोपास्य भिन्ना भवति तादृशी ॥ ९७ ॥

इदानीमभिन्नात्मन उपासने फलमाह—

उपास्यात्मानमेवात्मा जायते परमोऽथ वा।
मथित्वात्मानमात्मैव जायतेऽग्निर्यथा तरुः॥ ९८॥

उक्तमर्थमुपसहृत्य फलमुपदर्शयन्नाह—

इतीदं भावयेन्नित्यमवाचागोचरं पदम्।
स्वत एव तदाप्नोति यतो नावर्तते पुन ॥ ९९॥

नन्वात्मनि सिद्धे तस्य तत्पदप्राप्तिः स्यात्। न चासौ तत्त्वचतुष्टयात्मकाच्छरीरात्तत्त्वान्तर्भूत' सिद्ध इति चार्वाका। सदैवात्मा मुक्तः सर्वदा स्वरूपोपलम्भसम्भवादिति साख्यास्तान्प्रत्याह—

अयत्नसाध्यं निर्वाणं चित्तत्त्वं भूतज यदि।
अन्यथा योगतस्तस्मान्न दु खं योगिनां क्वचित्॥ १००॥

कथ सर्वदास्तित्व सिद्ध्येदिति वदन्त प्रत्याह—

स्वप्ने दृष्टे विनष्टेऽपि न नाशोऽस्ति यथात्मनः।
तथा जागरदृष्टेऽपि विपर्यासाविशेषतः॥ १०१॥

नन्वेव प्रसिद्धस्याप्यनाद्यनिधनस्यात्मनो मुक्त्यर्थं दुर्द्धरानुष्ठानक्लेशो व्यर्थो ज्ञानभावनामात्रेणैव मुक्तिप्रसिद्धेरित्याशङ्क्याह—

अदु खभावित ज्ञान क्षीयते दु'खसन्निधौ।
तस्माद्यथाबल दु खैरात्मानं भावयेन्मुनि.॥ १०२॥

तिष्ठति नियमेन तिष्ठेदिति वदन्त प्रत्याह—

प्रयत्नादात्मनो वायुरिच्छाद्वेषप्रवर्तितात्।
वायो शरीरयन्त्राणि वर्त्तन्ते स्वेषु कर्मसु॥ १०३॥
तान्यात्मनि समारोप्य साक्षाण्यास्ते सुखं जड.।
त्यक्त्वारोप पुनर्विद्वान् प्राप्नोति परमं पदम्॥ १०४॥

कमारोप शरीरादीनामात्मन्यध्यवसाय कथमसौ त त्यजतीत्याह—

मुक्त्वा परत्र परबुद्धिमहंधियं च
संसारदु खजननीं जननाद्विमुक्त.।

ज्योतिर्मयं सुखमुपैति परात्मनिष्ठ-
स्तन्मार्गमेतदधिगम्य समाधितन्त्रम् ॥ १०५ ॥

प्रशस्तिः ।

येनात्मा वहिरन्तरुत्तमभिदा त्रेधा विवृत्यादि ते
मोक्षोऽनन्तचतुष्टयामलवपुः सद्ध्यानतः कीर्तित.।
जीयात्सोऽत्र जिनः समस्तविपयः श्रीपादपूज्योऽमलो
भव्यानन्दकरः समाधिशतकः श्रीमत्प्रभेन्दुः प्रभु. ॥१०६॥

इति श्रीमत्पूज्यपादस्वामिविरचित समाधिशतक समाप्तम् ।

समाप्तोऽयं प्रथमोगुच्छकः ।

# अस्य गुच्छकस्य शुद्ध्यशुद्धिपत्रम् ।



| पृष्ठम् | पङ्क्ति | अशुद्धपाठ | शुद्धपाठ |
|---|---|---|---|
| ३४ | ९ | परिणममाणस्य | परिणममानस्य |
| ३४ | १५ | निरभिमुखा | निरभिमुखा |
| ३८ | १९ | यतिधर्मकथयन्नुपदिशति | यतिधर्ममकथयन्नुपदिशति |
| ३९ | ३ | कालोच्छन्नत्रसानि | कालोच्छिन्नत्रसानि |
| ४० | १६ | निषियते | निषिध्यते |
| ४१ | १४ | हिंसाया | हिसाया |
| ४३ | १९ | भुक्तौ | भुक्ते. |
| ४६ | २५ | भक्तिमतिभावितत्याग | भक्तमिति भावितस्त्याग. |
| ४७ | २० | लेग्वकृती. | लेखकृती |
| ४८ | १९ | इत्येतानतिचारानपि योगी | इत्येतानतिचारानपरानपि |
| ४९ | ६ | गुप्तितृतय समनुगम्यम् | गुप्तीना त्रितयमनुगम्यम् |
| ४९ | १४ | व्याधिदु खसगमनम् | व्याधिदु खमङ्गमलम् |
| ४९ | २० | मुक्तिमभिलषिता | मुक्तिमभिलषता |
| ५० | १२ | तस्मात्तत्पुन– | नासति तत्पुन– |
| ५५ | १२ | देहवित्तिका | देहवित्तिका |
| ५७ | १० | पूतिक्रमिश्रेणिभि | पूतिक्रमिश्रेणिभि |
| ५८ | २० | कोपादिवान् | कोपादिमान् |
| ६० | २ | काशा | का सा |
| ६० | १५ | पहिरपि | वहिरपि |
| ६० | १६ | वरिणति– | परिणति– |
| ६३ | २३ | स्तमिन् | स्तस्मिन् |
| ६८ | १० | स्त्रियस्त्वदिह | स्त्रियस्तदिह |

| | | | |
|---|---|---|---|
| ६९ | ७ | श्रुतवदुरुपत. | श्रुतवदुरु तपः |
| ७५ | १६ | विषमाश्च मानः | विषयाश्च मान- |
| ७८ | १४ | मपिच्छद्माल्य | मपिच्छद्माऽल्प |
| ७८ | १८ | ह्मिेति सस्थाः। | हि मेति मस्था.। |
| ७९ | १३ | भेतव्य | भेत्तव्य |
| ८० | २६ | काशा | का सा |
| ८५ | ५ | तत्त्वार्थश्रद्धान | तत्त्वार्थश्रद्धान |
| ९१ | २५ | –वीचीभाषण | –वीचिभाषण |
| ९२ | ११ | मारणान्तिकी | मारणान्तिकीं |
| ९३ | १७ | वर्णानुपूर्व्यं | वर्णानुपूर्व्याऽ |
| ९४ | १ | सद्वेद्य शुभायु– | सद्वेद्यशुभायु– |
| ९४ | १३ | सूक्ष्मसाम्परायछद्मस्थ– | सूक्ष्मसाम्परायच्छद्मस्थ– |
| ९५ | २२ | –लाम्बूवदरेण्डबीज– | –लाम्बूवदेरण्डवीज– |
| ९६ | २ | क्षन्तव्य | क्षमितव्य |
| ९७ | १२ | सुनिश्चित | सुनिश्चितम् |
| ९७ | १९ | हेयोपादानरूपेण | हेयस्यादानरूपेण |
| ९८ | १ | खल्वमी | सन्त्यमी |
| ९८ | २ | नस्यमाना नयादेशात् | न्यस्यमानतयादेशात् |
| ९८ | १८ | प्रतक्ष | प्रत्यक्ष |
| ९९ | ६ | प्रोक्तभाव | प्रोक्तमवि |
| ९९ | ७ | व्यास्याद्विंशतिधा | व्यासाद्विंशतिधा |
| ९९ | ९ | अनुगोऽनानुगामी | अनुगोऽननुगामी |
| ९९ | १० | वर्द्धिस्तु– | वर्द्धिष्णु– |
| ९९ | १३ | स्वार्थज्ञानमक्षानपेक्षया। | स्वार्थज्ञानमन्याऽनपेक्षया। |
| ९९ | १९ | घातिकार्म | घातिकर्म |
| १०० | १४ | नैगम– | नैगमः |

| | | | |
|---|---|---|---|
| १०० | २३ | भेदे नैक्य– | भेदेनैक्य– |
| १०१ | १३ | षड्द्रव्या– | षट्तत्त्वा– |
| १०१ | २४ | क्षायौपशमिक— | क्षायोपशमिक |
| १०२ | ७ | –सिद्धोऽसयतस्तथा । | सिद्धोसयतस्तथा । |
| १०२ | ११ | पारणामिकभावस्य | पारिणामिकभावस्य |
| १०२ | १८ | यद्विशेषमकृत्वैप | यद्विशेषमकृत्वैव |
| १०३ | ४ | मिथ्यादर्शनकर्मणा | मिथ्यादर्शनकर्मणः |
| १०३ | १५ | सयमर्द्धि | सयमर्द्धि |
| १०३ | २२ | शमनाक्षपणात्तथा । | शमनात्क्षपणात्तथा । |
| १०४ | ३ | द्विविधा | द्विधा |
| १०४ | ५ | चतुर्दश. | चतुर्दश |
| १०४ | ११ | प्राणापानस्तथायुश्च | प्राणापानौ तथायुश्च |
| १०४ | १६ | वेद क्रोधादिवित्तिषु ! | वेदक्रोधादिवित्तिषु ! ! |
| १०५ | ३ | ऽपरा' | ऽपरा |
| १०५ | २३ | समाह्येते | समा ह्येते |
| १०५ | २६ | वृश्चिकश्चेन्द्रगोपकाः | वृश्चिकश्चेन्द्रगोपकः |
| १०६ | ९ | लवणोदयस्तथा | लवणोऽयस्तथा |
| १०६ | १२ | क्रिरोलकाभ्रके | क्रिरोलकाभ्रके |
| १०६ | १७ | षाड्विंशत् | षाट्त्रिंशत् |
| १०७ | २ | मनोवाग्योगयोगायोगाना | मनोयोगा वाग्योगानां |
| १०७ | १४ | निरुपयोगौ | निरुपभोगौ |
| १०८ | २ | देवीनामैशानो | देवीनामैशान |
| १०८ | ४ | कषणान्मतः | कषणान्मतः |
| १०८ | ९ | प्राण्यक्षपरिहारः | प्राणस्य परिहारः |
| १०८ | २१ | सिद्धत्वयोगा | सिद्धत्वयोग्या. |
| १०८ | २२ | सम्यक्त | सम्यक्त्वं |

| | | | |
|---|---|---|---|
| १०८ | २५ | मिथ्याद्दर्शन | मिथ्यादर्शन |
| ११३ | १९ | ततोऽन्याऽभ्यो | ततोऽन्याभ्यो |
| १२६ | ९ | स्निग्वरूक्षत्वाद्बन्धन्ते | स्निग्धरूक्षत्वाद्बन्ध ते |
| १२९ | ९ | निवृत्तत्व | निर्वृतत्वं |
| १३२ | ३ | तत्त्वपरायणाः | तत्त्वपरायणः |
| १३४ | २३ | बन्धतत्त्व | वन्धतत्त्वं |
| १३५ | ९ | थर्मस्तद– | थर्मस्तदा |
| १३६ | ४ | भवस्यैक– | भवस्यैक्य– |
| १३८ | १३ | उष्णरुक्ष– | उष्णरूक्ष– |
| १४३ | १७ | तत्रावमोदर्यमुपवासौ | तत्रावमौदर्यमुपवासो |
| १४५ | ७ | प्रवज्याहायन | प्रवज्याहापन |
| १४६ | २ | यद्धर्मध्यान | यद्धर्म्यध्यान |
| १५७ | टि० | –प्रामाण्य– | प्रामाण्या– |
| ६० | २३ | –लघुत्वम् । सूक्ष्मा | लघुत्वं सूक्ष्मा |
| १६१ | १३ | परिणामितत्वा– | –परिणामित्वा– |
| १६१ | १९ | उग्ग | उग्गा |
| १६६ | ४ | अभेदानुचरितया | अभेदानुपचारतया |
| १७० | ३ | सिद्धिममीसुभि | सिद्धिमभीप्सुभि. |
| १७६ | २२ | यतस्तत्त्ववेदी | यस्तत्त्ववेदी |
| १८३ | १३ | तदेव | तदैव |
| १८३ | २५ | समिति परता | समितिपरता |
| १८६ | २ | एप एक | एक एप |
| १९१ | २३ | आज्ञानी | अज्ञानी |
| १९४ | १ | –निरुपिणा— | –निरूपणा— |
| १९७ | ८ | श्रेत्सता | श्विन्नता |
| १९८ | १३ | तिष्ठत्यात्मनि खात– | तिष्ठत्यात्मनिखात— |

| | | | |
|---|---|---|---|
| १९८ | २० | पृथगधि— | पृथग्विधि— |
| १९९ | ५ | तिष्ठत्यात्मनि खात— | तिष्ठत्यात्मनिखात— |
| २१० | १८ | —बाधकास्वसुखादिवत् | —बाधकात्स्वसुखादिवत् |
| २११ | १२ | नार्थोपदेशता | नार्थोपदेशिता |
| २१२ | १ | कर्मदेहेवा | कर्मदेहेनाऽ |
| २१६ | १५ | प्रतान | प्रधान |
| २१८ | १५ | सुनिर्णेता | सुनिर्णेताऽ |
| पृष्ठ | पङ्क्ति | अशुद्धम् | शुद्धम् |
| ,७३ | १५ | कीर्तिताः परै | परिकीर्तिताः |
| २७३ | २२ | स्य भिदानत. | स्याभिधानत |
| ˜७४ | ३ | यत्र | योऽत्र |
| २७४ | १२ | प्रपरीक्षिकै | प्रपरीक्षकै |
| २७४ | २० | इति साता | इति सत्ता |
| २७५ | ९ | तथाभिप्रेति | तथाभिप्रैति |
| २७५ | १३ | वस्तुपर्याय | यस्तु पर्याय |
| २७५ | १४ | व्यवहारद्वया | व्यवहारनया |
| २७५ | २० | त्सवाद्यत्वा | त्सबाधत्वा |
| २७६ | ५ | विजाते | सजाते |
| २७७ | ५ | रपलापक | रपलापत्त |
| २७७ | २१ | माधृता | मादृता |
| २७८ | १३ | परिणामोत्थ | परिणामोऽर्थ |
| २७८ | १६ | पचती | पठती |
| २७९ | १८ | नयविदा | नयविदा |
| २७९ | | मप्तभङ्गी व | सप्तभङ्गी च |
| २७९ | | नाभिदागति. | नाभिवाग्गतिः |